तस्य प्रतीते· । ततो भोक्तृत्वमात्मन्येवेति तदपलापिनो लोकायतिकस्य भोक्तृत्व क्वापि न व्यवस्थामास्तिघ्नुवीत ।[1]

§ १० ननु पृथिव्यादिसमुदयशरीरकार्यान्वयिनि गर्भादिमरणपर्यन्ते चैतन्ये सर्वचेतनाविशेषव्यापिनि भोक्तृत्व सभवति. शरीरादिविलक्षणत्वात्तस्येति चेत्; तदेवात्मद्रव्यमस्तु, जन्मन· पूर्व मरणादूर्ध्वमपि तस्य सद्भावोपपत्ते. । विवादापन्न चैतन्यमनाद्यनन्त पृथिव्यादिसमुदयशरीरेन्द्रियविषयेभ्योऽत्यन्तवैलक्षण्यस्यान्यथानुपपत्ते ।न हि तत्कार्य ततोऽत्यन्तविलक्षणमस्ति, रूपादिसमन्वयात्। चैतन्यस्यापि सत्त्वादिसमन्वयान्नात्यन्तविलक्षणत्वमिति चेत्; न; तत्त्वभेदेऽपि तस्य[1] भावात् पृथिव्यादीनामभेदापत्ते । पृथिव्यादितत्त्वभेदानामेकविकारिसमन्वयाभावाद्भेद एव केषाचित्[2] प्रागभावादिभेदवत्; किमिदानीं चैतन्यभूतयोरेकविकारिसमन्वयोऽस्ति येन तत्त्वान्तरत्वेन भेदो न स्यात्, तस्मादेकविकारिसमन्वयासत्त्व वैलक्षण्यम्, तदेव च तत्त्वान्तरत्वमित्यनाद्यनन्तता[2] चैतन्यस्य साधयतीत्यनाद्यनन्तत्वेन प्रसिद्ध· सोऽयमात्मा हर्षविषादाद्यनेकाकारविवर्त प्रत्यात्मवेदनीय प्रतिशरीर भेदाभेदात्मकोऽप्रत्याख्यानार्ह प्रतिक्षिपन्तमात्मान प्रतिबोधयतीति कृत प्रयासेन । ततश्चार्वाकमतं दृष्टविरुद्धमिति सिद्धम् ।

§ ११ एतेन [3]तदिष्टविरुद्ध च सिद्धम्, अनाद्यनन्तस्यात्मन साधितत्वात्, प्रतिषेधगौणकल्पनादिभिस्तस्य साधयिष्यमाणत्वाच्च[4] । तदुक्तम्—

**"[3]प्रतिषेध-गौणकल्पन-शुद्धपदानेकसंमतिजिनोक्तैः ।**
**निर्बाधलक्षणार्थैर्लिङ्गैरपि भाव्यते भावः[4] ॥"**

[ ]

§ १२ तद्यथा—'नास्ति जीव ' इति प्रतिषेधवचनमेव जीवस्य मुख्यवृत्त्या अस्तित्वं सूचयति, निरूपाख्येषु विधिप्रतिषेधानुपपत्ते । यथा—'नास्तीह घट ' इति प्रतिषेधो देशान्तरे घटास्तित्वं प्रकाशयति तथा स्वरूपादिचतुष्टयेन सत एव जीवस्य पररूपादिचतुष्टयेन नास्तित्व घटते नान्यथा।

§ १३. ननु खरविषाणा[5]दीनामत्यन्ताभावरूपाणामपि निषेधविषय[6]त्वोपपत्तिरिति चेत्; न, गवादिमस्तके सत एव विषाणस्य खरादिमस्तके प्रतिषेधदर्शनात् । तत सत प्रतीतौ[7] प्रतिषेधसिद्धिरिति सुनिरूपितम् ।

§ १४ तथा चित्रपुरुषादौ 'इदं [8]सजीवचित्रम्' इति गौणकल्पन मुख्यवृत्त्या जीवास्तित्व कथयति, यथा—'सिंहो माणवक ' इति माणवके सिंहत्व विशिष्टजात्यादिपरिणतसिंहास्तित्वमिति । तस्माद्गौणकल्पनात् मुख्यसिद्धिरिति निरवद्यम् ।

§ १५. तथा 'जीव ' इति शुद्धपद मुख्यवृत्त्या, स्वार्थवत्, शुद्धपदत्वात्, प्रमाणपदवत् । तत· शुद्धपदाभिधेयत्वात् 'अस्ति जीव ' इति च सिद्धम् ।

§ १६ तथैवानेकविशिष्टजनसमतत्वात्, आप्तप्रणीतत्वाच्च 'अस्ति जीव ' इति सुव्यवस्थितम् ।

१. सत्त्वादिसमन्वयस्य । २ नैयायिकानाम् । ३ प्रतिषेधश्च गौणकल्पन च शुद्धपदश्च अनेकसम्मतिश्च जिनोक्तिश्च तै । ४ जीवः । ५ निरूपेषु तुच्छेषु ।

1 –चित क०, ग० । 2. –नन्तरा चैत–क०, ख० । 3 –तदेष्ट क० । 4 –माणाच्च क० । 5. –दिना ख० । 6 –विषयत्वोप–ग० । 7 प्रतीतो प्रति क० । 8 सजोव क०, ख० ।

§ १७ किं च भूतचैतन्ययोर्बहिरन्तर्मुखावभासयोः बाल्यादि-रागादि-विरुद्धधर्माध्यासितयोर्द्रव्यान्तरभावेन[1] भिन्नप्रमाणग्राह्यत्वात् भेद एव। तयोर्देशभेदेनादर्शनादभेदे शरीराकारपरिणतावनिवर्न-पवनसख-पवनानामप्येकत्वप्रसगात्। "उपादानकारणसदृशं हि कार्यं भवति।" [ ] इति वचनाद् धारणेरणद्रवोष्णतारूपेण भूतसादृश्याभावात्, अमूर्तचैतन्यस्य मूर्तकार्यत्वायोगाच्च शरीराद्भिन्नमेव चैतन्यम्।

§ १८ तस्य चाभिलापो हि प्रत्यभिज्ञाने सति प्रादुर्भवति, प्रत्यभिज्ञान च स्मरणे सति, स्मरण च पूर्वानुभव[2] एव भवतीति पूर्वानुभव सिद्धः। अन्यथा तदहर्जातबालकस्य स्तनादावभिलाषाऽभावप्रसगात्। मृताना केषाचिद्रक्षोयक्षादिकुलेषु स्वयमुत्पन्नत्वेन कथयतां दर्शनात् केषाचिद्भवस्मृतेरुपलम्भाच्च परलोकोऽप्यस्ति। तदुक्तम्—

"तदहर्जस्तनेहातो रक्षो दृष्टेर्भवस्मृतेः[3]।
भूतानन्वयनात् सिद्धः प्रकृतिज्ञः सनातनः॥"

[ ] इति

§ १९ जननादिकारणाविशेषेऽपि सुखदुःखादिवैचित्र्यदर्शनात् पुण्यपापादिकमप्यस्त्येव। एव प्रमाणप्रसिद्धे[4] परलोके परलोकपुण्यपापप्रद्वेषि बृहस्पतिमत न सता मनो मनागपि प्रीणयति[5], किंतु उपालम्भमेवार्हति। स चोक्त स्वामिभिः—

'मद्याङ्गवद्भूतसमागमे ज्ञः शक्त्यन्तरव्यक्तिरदैवसृष्टि'।
इत्यात्मशिश्नोदरपुष्टितुष्टैर्निर्ह्रीभयैर्हा मृदवः प्रलब्धाः॥
दृष्टेऽविशिष्टे[6] जननादिहेतौ विशिष्टता का प्रतिसत्त्वमेषाम्।
स्वभावत. किं न परस्य सिद्धिरतावकानामपि हा प्रपातः॥
स्वच्छन्दवृत्तेर्जगतः स्वभावादुच्चैरनाचारपदेष्वदोषम्।
निर्घुष्य दीक्षा सममुक्तिमानास्त्वद्दृष्टिबाह्याः बत विभ्रमन्ति[7]॥

[ युक्त्यनु० श्लो० ३५-३७ ] इति

ततो नाय बृहस्पतिराप्ततामात्मसात्करोति।

§ २० यदुक्तम्—'सर्वज्ञो नास्ति' इत्यादि, तदपि प्रलापमात्रमेव; प्रत्यक्षत· सर्वज्ञस्य मुने, अनुमानस्यागमस्य च नास्तित्वव्यवस्थापनासभवात्, तस्य भावविषयताभ्युपगमात्[8]। यदि किंचित् प्रत्यक्ष तत्राप्रवर्तमानत्वादेव तदभावं व्यवस्थापयेत्, तदा पुरुषान्तरादि-प्रत्यक्षान्तराणामप्यभाव तदेव गमयेत्, तद्विषयाणा च [9]क्ष्मादीनामित्यतिप्रसग स्वयमिष्टस्य बृहस्पत्यादि-प्रत्यक्षस्यापि सविषयस्याभ वसिद्धे।

---

१ बाल्यादिभावो हि भौतिकशरीरगोचर। २ जलम्। ३. अग्निः। ४ धारण पृथिव्याः, ईरण वाय्वो, द्रवो जलस्य, उष्णता चाग्ने। ५ जीवस्य। ६ तुलना—प्रमेयरत्न०। ७ प्रत्यक्षस्य।

1 –तराभावेन क०। 2 –नुभूत एव क०। 3 –स्कृवे क०। 4 प्रसिद्ध पर–क०, ख०। 5 प्रणयति क०, ख०। 6 दृष्टि क०। 7 इद पद्य ख 'प्रतौ नास्ति'। 8. विषयत्वाभ्यु० ख०। 9 -दिना० ख०।

§ २१. अथ प्रत्यक्षान्तर स्वयमात्मानं व्यवस्थापयति पृथिव्यादि[1]स्वविषय च तत्र प्रवर्तनादतो[2] न तदभावप्रसग इति मतम्; तर्हि सर्वज्ञोऽपि स्वसवेदनादात्मानं स्वर्गापूर्वादिविषय च व्यवस्थापयति, इति कथ तदभावसिद्धि:, प्रमाणान्तरस्य[1] च तद्वचनस्य[3] [4]हेतुवादरूपस्याऽहेतुवादरूपस्य च स एव व्यवस्थापक स्यादिति कुतस्तदभावसिद्धि:। सर्वज्ञ स्वपरव्यवस्थापकोऽस्तीत्यत्र किं प्रमाणमिति चेत्; स्वप्रत्यक्षैकप्रमाणवादिन: प्रत्यक्षान्तरं स्वपरविषयमस्तीत्यत्र किं प्रमाणम्, तथा प्रसिद्धिरन्यत्रापि, इति न प्रत्यक्षं तदभावावेदकम्, अतिप्रसगस्य दु:परिहरत्वात्।

§ २२ किं च, सर्वज्ञत्वाभाव प्रत्यक्षेण क्वचित् कदाचित् कस्यचिद् व्यवस्थाप्यते, सर्वत्र सर्वदा सर्वस्य वा? तत्राद्यपक्षे परस्येष्टापादनम्।[3] द्वितीयपक्षे सर्वत्र सर्वदा सर्वस्य सर्वज्ञत्वाभाव प्रत्यक्षतः सविदन् स्वय सर्वज्ञः स्यात्। तथा सति व्याहतमेतत् सर्वज्ञाभाववचन चार्वाकस्य।

§ २३. नाप्यनुमान तदभावसाधकम्, तदनभ्युपगमात्[5] स्वयमनुमान निराकुर्वन्ननुमानादेव सर्वज्ञाभाव साधयति इति कथमनुन्मत्तः।

§ २४. तदेवं बाधकाभावादस्ति सर्वज्ञ। स च स्याद्वादी भगवन्नर्हन्नेवान्ययोगव्यवच्छेदेन निश्चीयते, तस्यैव युक्तिशास्त्राविरुद्धवाक्यत्वात्[6]। अन्येषा न्यायागमविरुद्धभाषित्वात्। ततस्तदुक्तो[4] धर्मो मोक्षश्च व्यवतिष्ठते। तन्निराकरणे चार्वाकाणा [7]प्रमाणाभावस्य प्रतिपादितप्रायत्वात्। प्रलापमात्रस्य च प्रेक्षावतामनादरणीयत्वादिति स्थित दृष्टेष्टविरुद्धत्वात् चार्वाकमतमसत्यमिति।

स्वपराविदिताध्यक्ष[8]चार्वाकाणा वचोऽखिलम्।
भवेत् प्रलापमात्रत्वान्नावधेय विपश्चिताम्॥
न चार्वाकमत सत्यं दृष्टादृष्टेष्टबाधत।
न च तेन प्रतिक्षेप: स्याद्वाद(स्ये)ति[9] निश्चितम्॥

[ इति चार्वाकशासन-परीक्षा ]

१. अनुमानरूपस्य। २. सर्वज्ञस्य प्रमाणान्तरस्य च। ३ 'अस्मिन् काले अत्र कश्चित्सर्वज्ञो नास्ति' इत्यत्र विवादाभावात्। ४. स्याद्वादितीर्थंकरप्रणीत।

1 –द्विविप– क०। 2 प्रवर्तमानात् क०, ख०। 3 तद्वचस्य ख०। 4 हितवाद ख०। 5 तदभ्युप– क०। 6 –वाक्त्वात् ख०, ग०। 7 –माणभाव– क०, ख०। 8 विधिताध्यक्षाणा चा– क०, ख०। 9 –इचेति क०, ख०।

## [ बौद्धशासन-परीक्षा ]

§ १. तथा ताथागतशासनमपि दृष्टेष्टविरुद्धम्। एवं हि सर्वभावानां क्षणभङ्गसंगममेवाङ्ग-शृङ्गारमङ्गीकुर्वाणास्ताथागताः संगिरन्ते—रूपादिपञ्चस्कन्धा एव तत्त्वानि। रूपरसगन्धस्पर्शपरमाणवः सजातीयविजातीयव्यावृत्ताः परस्पराऽसंबद्धा[1] रूपस्कन्धाः। सुखदुःखादयो वेदनास्कन्धाः। सवि-[2]कल्पकनिर्विकल्पकज्ञानानि विज्ञानस्कन्धाः।

"जाति-क्रिया-गुण-द्रव्यसंज्ञाः पञ्चैव कल्पनाः।
अश्वो याति सितो[3] घण्टी[१] तदास्येति[२] यथाक्रमम्[4] ॥

[ ] इति

इत्येतःकल्पनासहितं सविकल्पकम्, तद्रहितं निर्विकल्पकम्। तथा वृक्षादिनामानि संज्ञास्कन्धाः। ज्ञानपुण्यपापवासनाः संस्कारस्कन्धा इति। रूपवेदनाविज्ञानसंज्ञासंस्कारा इति पञ्च स्कन्धाः।

§ २. तेषु च पूर्व-पूर्वचित्तविशेषप्रभवा उत्तरोत्तरचित्तक्षणा उपादानोपादेयरूपेण सजात्युत्तर-क्षणं जनयन्तः[5] परस्परासंपृक्ता निरन्वयप्रतिक्षणविशरारवो निरंशाश्च भ्रान्तिवशात् ग्राह्य-ग्राहक-संवेदनाकारत्रयाक्रान्ता [6]विजातीयाऽव्यवधानलघूत्पत्ति[३]-सदृशापरापरोत्पत्तिविप्रलब्धबुद्धेः संतान-रूपेण वर्तमाना आत्माभिधानं जनयन्ति। तत्रैकत्वप्रत्यभिज्ञानमपि लूनपुनर्जातनखकेशादौ पूर्वापरै-कत्वाभावेऽपि दर्शनान्नित्यत्वसमर्थनाय नालमिति त्रिकालानुयाय्ये[7]कत्वरहिता एव[8] वर्तन्ते; किंतु ज्ञान-वैराग्यभावनातिशयवशादविद्यातृष्णाविगमे निःशक्तिकानामुत्तरोत्तरविज्ञानक्षणमजनयतां निर-न्वयविनाशेन संतानोच्छित्तिर्मोक्षः। "प्रदीपनिर्वाणकल्पमात्मनिर्वाणम्" [ ] इति वचनात्। तदुक्तम्—

[9]"क्षणादूर्ध्वं न तिष्ठन्ति शरीरेन्द्रियबुद्धयः।
दीपार्चिरिव वर्तन्ते स्कन्धाः क्षणविलम्बिताः[10] ॥"

[ ] इति।

§ ३. तस्य च मोक्षस्योपायः काषायचीवरपरिधानशिरस्तुण्डमुण्डनब्रह्मचर्यधारणादयः। तथैव दुःखसमुदय[४]निरोध[५]मार्गाः[६] इति चत्वारः पदार्थाश्चतुरार्यसत्याभिधाना मुमुक्षुभिर्ज्ञातव्याः।

§ ४. तत्र सहज-शारीर-मानसागन्तुकानि दुःखानि। तत्र सहजं क्षुत्तृष्णा-मनोभूभया-दिकम्। शारीरं वात-पित्त-श्लेष्मणां[७] वैषम्यसंभूतम्। मानसं धिक्कारावज्ञेच्छाविघातादिजनितम्। आगन्तुकं शीतवातातपाशनिपातादिजनितम्। एतद्दुःखविशिष्टाश्चित्तक्षणाः संसारिणां दुःखमित्यु-

१ घण्टावान्। २ तत्संज्ञक। ३ आशूत्पत्ति। ४. समुदेति अस्मादिति समुदयः दुःखकारण-मिति यावत्। ५ निर्वाणम्। ६ अष्टाङ्गिकं सम्यग्दृष्ट्यादि। ७. कफ।

1 –सम्बन्धा क०। 2 सविकल्पनिर्विकल्पकज्ञा– क०, ख०। 3 पितो क०, ख०। 4. –स्यो यथा– क०। तालास्यो– ख०। 5 जनयत क०, ख०। 6 –क्रान्तानि जातीया– क०, ख०। 7. यायै-कत्व– क०। 8 रहितावर्तन्ते, क०, ख०। 9 दूद्ध्व, ख०। 10 विलम्बिन' ग०।

च्यन्ते । तद्‌दु खजननकर्मबन्धहेतुभूते अविद्यातृष्णे समुदयशब्देनोच्येते[1] तत्र वस्तुयाथात्म्याऽप्रतिपत्तिरविद्या । इष्टानिष्टेन्द्रियविषयप्राप्तिपरिहारवाञ्छा तृष्णा । निरोधो नाम अविद्यातृष्णाविनाशेन निरास्रवचित्तसंतानोत्पत्तिलक्षण सतानोच्छित्तिलक्षणो वा मोक्षः । तथा[2] मोक्षहेतुभूता मार्गणा ।

§ ५ सा च सम्यक्त्व-सज्ञा-सज्ञीवाक्कायकर्मान्तर्व्यायामाऽऽजीवस्थिति-समाधिलक्षणाष्टाङ्गाः । तत्र सम्यक्त्व पदार्थाना याथात्म्यदर्शनम् । सज्ञा वाचक. शब्दः सज्ञी वाच्योऽर्थः । वाक्कायकर्मणी वाक्कायव्यापारौ । अन्तर्व्यायामो वायुधारणा । आजीव[3]स्थितिरायुरवसानपर्यन्त प्राणधारणा । समाधिर्नाम सर्व दु.खम्, सर्वं क्षणिकम्, सर्वं निरात्मक सर्व शून्यमिति[4] सत्यभावना । तस्या प्रकर्षादविद्यातृष्णाविगमे निरास्रवचित्तक्षणा. सकलपदार्थावभासका. समुत्पद्यन्ते । तद्योगिप्रत्यक्षम् । स च योगी[5] यावदायुस्तावत्कालमुपासकाना धर्ममुपदेश्य आयुरवसाने प्रदीपनिर्वाणकल्पमात्मनिर्वाण प्राप्नोति उत्तरचित्तस्योत्पत्तेरभावादिति । तदप्युक्तम्—

**"दीपो यथा निर्वृत्तिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्[6] ।**
**दिशं न कांचिद्विदिशं न कांचित् स्नेहक्षयात्केवलमेति शान्तिम् ॥**
**जीवस्तथा[7] निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।**
**दिशं न कांचित् विदिशं न कांचित् मोहक्षयात् केवलमेति शान्तिम् ॥"**

[ सौन्दरनन्द० १६।२८,२९ ] इति

[ उत्तरपक्ष ]

§ ६ तदेतत्सौगतमत तावत् दृष्टविरुद्धम् । सौगताभिमतस्य निरन्वयविनाशिपरमाणुमात्रलक्षणस्वलक्षणस्य स्थूलस्थिरसाधारणाकारावभासिना प्रत्यक्षेण विरुद्धत्वात् । नहि प्रत्यक्षे सूक्ष्मक्षणिकासाधारणरूपाः परमाणव प्रतिभासन्ते, स्थूलस्थिरसाधारणाकारात्मनामेव घटादीना प्रतिभासनात् ।

§ ७ ननु परमाणुष्वेवात्यासन्नासंसृष्टेषु दृष्टौ प्रतिभासमानेषु कुत[8]श्चिद्विभ्रमनिमित्तादात्मनि परत्र चासन्तमेव स्थूलाद्याकार दर्शयन्तो [3]सवृति तान् सवृणोति केशादिभ्रान्तिवदिति चेत्; नैवम्; बहिरन्तश्च प्रत्यक्षस्य भ्रान्तत्वापत्ते, तस्य अभ्रान्तत्वकल्पनापोढत्वाभावप्रसगात्, **"प्रत्यक्षं कल्पनापोढमभ्रान्तम्"** [न्यायवि०१।४] इति लक्षणस्याऽसभवदोषानुषगात् ।

§ ८ ननु नैष दोष, परमाणुप्रत्यक्षस्य तल्लक्षणसभवादिति चेत्, न; परमाणूना जातुचिदध्यक्षबुद्धावप्रतिभासनात् । न हि कश्चिल्लौकिकः परीक्षको वा देशकालविप्रकृष्टार्थवत् परमाणून् साक्षात्प्रत्येति, अन्यथा प्रतीत्यपलापप्रसगात् । त इमे परमाणवः प्रत्यक्षबुद्धावात्मान न समर्पयन्ति प्रत्यक्षता च स्वीकर्तुमिच्छन्तीत्यमूल्यदानक्रयिण[4] ।

१ तन्मते हि—सम्यग्दृष्टि, सम्यक्सकल्प, सम्यग्वाक्, सम्यग्व्यायाम, सम्यगाजीव, सम्यक् प्रयत्न, सम्यक्स्मृति, सम्यक्समाधिश्चेत्यष्टौ । २ भावनाया । ३ कल्पना । ४ मूल्य दातु न प्रभवन्ति अथ च प्रत्यक्षतामिच्छति ।

1 नोच्यते क० । 2 तदा क०, ख० । 3 अजीव क०, ख० । 4 –त्मक शून्यम् क० । 5 योगि क०, ख० । 6 –रिक्षम् क०, ख । 7 जिनस्तथा क० । 8 –माने कुत– क०, ख० ।

§ ९ न च परमाणव प्रत्यक्षा भवितुमर्हन्ति, तत्साक्षात्करणे प्रमाणाभावात् । निर्विकल्पकं प्रत्यक्षमस्तीति चेत्; न; तस्याऽव्यवसायात्मकस्याप्रामाण्यात्, अविसवादवैकल्यात् । तथा हि– यदविसवादविकल न तत्प्रमाण, यथा अज्ञस्य विषदर्शनम्, तद्विकल च सौगतपरिकल्पितं दर्शनम् । अविसवादो हीत्थं [1]गेयमित्थ चित्रमित्यभिसन्धिकरणमेव । "अभिप्रायनिवेदनादविसंवादनम्" [प्र० वा० १।३][1] इति वचनात् । न च तन्निवेदनमव्यवसायस्य, अज्ञविपदर्शनस्यापि तत्प्रसंगात् ।

§ १० अव्यवसायस्यापि दर्शनस्य व्यवसायजननात्त[2]न्निवेदनमिति चेत्; न; व्यवसायस्यैवासभवात्, कुतश्चिदपि तत्स्वरूपस्याऽव्यवस्थिते. । विकल्पस्वरूपस्य स्वसवेदनेन व्यवस्थापनेऽपि तस्य विकल्पान्तरापेक्षत्वप्रसगात्, नीलादिस्वलक्षणदर्शनवत् ।

§ ११ यदि स्वसवेदन निश्चयस्वरूप निश्चयनिरपेक्षतया परिनिष्ठापयेत् तदा वस्तुदर्शनमपि स्वलक्षणम्, विशेषाभावात्, तथा च किं निश्चयापेक्षया ? वस्तुदर्शनस्य निश्चयापेक्षाया वा निश्चयस्वरूपसवेदनस्यापि निश्चयान्तरापेक्षणादनवस्था स्यात् । विकल्पस्य[3] विकल्पान्तरेण व्यवस्थापनेऽपि तस्यापि तदन्तरेण व्यवस्थेति तदवस्थैवानवस्था । ततो व्यवसाय एव न सभवति यतस्तज्जननात् प्रत्यक्ष प्रामाण्यमुपढौकेत ।

§ १२ यथा कथचिद् व्यवसायस्य सभवे वा न तज्जनन सभवति अव्यवसायाद् व्यवसायस्य गर्दभादश्वस्येवानुत्पत्तेः । अभिलापशून्यादप्यध्यक्षाद् व्यवसायकल्पनाया स्वलक्षण किं नाध्यवसाय जनयेत् स्वयमभिलापशून्यमपि, प्रत्यक्षमध्यवसायस्य हेतुर्न पुन रूपादिरिति कथ सुनिरूपिताभिधानम् ।

§ १३ यदि पुनरविकल्पकादपि प्रत्यक्षाद्विकल्पात्मनोऽव्यवसायस्योत्पत्ति. प्रदीपादे कज्जलादिवत्, विजातीयादपि कारणात् कार्यस्योत्पत्तिदर्शनादिति मतम्, तदा [3]तादृशोऽर्थाद्विकल्पात्मन. प्रत्यक्षस्योत्पत्तिरस्तु तत एव ।

§ १४ [4]जातिद्रव्यगुणक्रियापरिभाषाकल्पनारहितादर्थात् कथं जात्यादिकल्पनात्मक प्रत्यक्ष स्यादिति चेत्; प्रत्यक्षात्तद्रहिताद्विकल्प. कथ जात्यादिकल्पनात्मक स्यादिति समान पर्यनुयोग [5] । विकल्पस्य जात्यादिविषयत्वाददोष इति चेत्, न; प्रत्यक्षवत् तस्य[4] जात्यादिविषयत्वविरोधात्; तत[5] एव तस्य वस्तुनोऽप्युत्पत्तिप्रसक्तेश्चेति व्यवसायहेतुत्वमनुपपन्नमेव ।

§ १५. अथ व्यवसायवासनोन्मीलनेन अव्यवसायस्यापि व्यवसायहेतुत्व दर्शनस्येति चेत्; न; तद्वदर्थस्यैव तद्धेतुत्वप्रसगेन अन्तर्गडुनो दर्शनस्याऽकल्पनापत्ते. । व्यवसायहेतुत्वेन चाविसवादित्वमौपचारिकमेव दर्शनस्य स्यात्, मुख्यत सनिपत्याऽभिप्रायनिवेदनेन व्यवसायस्यैव तदुपपत्ते ।

१ "प्रमाणमविसवादिज्ञानमर्थक्रियास्थिति ।
अविसवादन शाब्देऽप्यभिप्रायनिवेदनात् ॥" प्र० वा० १।३

२ व्यवस्थापयेत् । ३ शब्दरहितात् । ४ निर्विकल्पस्य । ५ प्रत्यक्षात् ।

1 –हितं ज्ञेय क० । 2.–नात्त निवेदमिति ख०, –जनमिति ग० । 3 इति पद 'ग' प्रतौ नास्ति । । 4 एव तद्वज्जात्व– क०, ख० । 5 पर्यानयोग क०, ख० ।

न च ततस्तस्य प्रामाण्यम्; सन्निकर्षादावपि तत्प्रसगात्। ततो युक्तमविसंवादवकल्यात् दर्शनमप्रमाणमिति। तदुक्तम्—

"[1]विपदर्शनवत्सर्वमज्ञस्याकल्पनात्मकम्।
दर्शनं न प्रमाणं स्यादविसंवादहानितः॥"

[ सिद्धिविनि० १।२४ ] इति

§ १६ प्रामाण्याभावे च दूरतः प्रत्यक्षत्वम्, तस्य[1] तद्विशेषत्वेन तदभावेऽनुपपत्ते। अतः प्रत्यक्षाभावान्न परमाणूना प्रतिभासने प्रत्यक्ष प्रभवति।

§ १७ नाप्यनुमानम्; तस्य [2]लिङ्गदर्शनपूर्वकस्य प्रत्यक्षा[3]भावेऽनुपपत्ते। नाप्यागमः वाचा वस्तुविषयत्वानिष्टे.। एवं सकलप्रमाणाभावात् कथमर्थप्रमिति स्यात्, तदभावे परोदितपञ्चस्कन्धरूपाशेष[5]प्रमेयानुपपत्ति। तथा च सकल जगच्छून्यमेवेति स्याद्वादविद्वेषिना सौगताना महदनिष्टमुपनिपतति। तदुक्त स्वामिसमन्तभद्रपादै.—

"प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गिगम्यं न तदर्थलिङ्गम्।
वाचो न वा तद्विषयेण योग. का तद्गतिः कष्टमश्रुण्वतां ते[3]॥"

[ युक्त्यनु० श्लो० २२ ] इति

§ १८ तत.[6] प्राक्परमाणव[7] प्रतिभासन्त इति परेषा प्रतिज्ञा णेप्लूयते, तथा पश्चात् सवृत्या स्थूलाद्याकारा प्रतीयन्ते इति प्रतिज्ञापि। प्रागपि प्रत्यक्षेण नीलादिवत् स्थूलाद्याकाराणा दर्शनात् नीलविकल्पवत् स्थूलादिविकल्पाना च प्रतीते।

§ १९ तस्मादिन्द्रियबुद्धयोऽपि स्वलक्षणविषया मा भूवन् केवल स्थूलाद्याकारान् पश्येयुः, अदृष्टे विकल्पायोगात्, [8]अतिप्रसगाच्च।

§ २० यथैव हि नीले पीतादीनामदृष्टत्वान्न तद्विकल्पोत्पत्ति, नीलस्य दृष्टत्वान्नील-विकल्पस्यैवोत्पत्ते.[9], तथैव स्थूलादीनपश्यत तद्विकल्पोत्पत्तिर्मा भूत्; स्वलक्षणदर्शनात् स्वलक्षणविकल्पोत्पत्तिरेवास्तु।

§ २१ न चैवम्, स्थूलाद्याकारेष्वेव विकल्पोत्पत्ते.। यदि पुन स्थूलाद्याकाराणामदर्शनेऽपि तदनादिवासनावशादेव तद्विकल्पोत्पत्तिरुररीक्रियते तदा नीलादिरूपादर्शनेऽपि तद्वासनासामर्थ्यादेव नीलादिविकल्पोत्पत्ति[6]। ततो[7] नीलादिरूपव्यवस्था मा भूत्। तद्वत्सुखादिव्यवस्थितिरपि कुत. सभाव्येत्। स्वसंवेदनव्यवस्था च तन्निश्चयोत्पत्ते दुर्घटैव। तदनुत्पत्ते सुतरा तदव्यवस्था स्वर्गप्रापणशक्त्यादिवद् वेद्याकारविवेकवद्वा। "स्वरूपस्य स्वतो गतिः" [ प्र० वा० १।५ ]

१ प्रत्यक्षत्वस्य। २. प्रामाण्याभावे। ३ अर्हत इष्टमित्यध्याहार, तेन ते इष्टमश्रुण्वतामिति सम्बन्ध — आ, टि०। ४ स्थूलादिविकल्पोत्पत्ति.। ५ स्थूलादि। ६ स्यादिति। ७ नीलादिविकल्पोत्पत्त्यन्यथानुपपत्त।

1 एष क०, ख०। 2 लिङ्गादर्श० क०। 3 प्रत्यक्षभावे क०। 4. अनुपपत्ति क०, ख०। 5 –रूपा शेष– क०। 6. तत् क०, ख०। 7 परमाणत क०, ख०। 8 —योगादपि प्र– क०, ख०। 9 दृष्टत्वान्नीलोत्पत्ति– क०, ख०।

इत्यपि तथा निश्चयानुत्पत्तौ न सिद्ध्येत्, ब्रह्माद्वैतादिवदिति सर्वं विप्लवते ।

§ २२ तत कुतश्चिन्निश्चयात् नीलादिस्वभावव्यवस्थाया स्थूलादिनिश्चयात् वस्तुनि परमार्थत स्थूलाद्याकारव्यवस्थितिरास्थेया[1] अन्यथा क्वचिदपि व्यवस्थानासिद्धेः ।

§ २३ ततो न तेषा सावृतत्वम्, सवृते विकल्पात्मिकाया प्रागेव [1]प्रत्यादिष्टत्वाच्चेति प्रागुक्त शाक्यवाक्यमशेषत प्रतिज्ञारूप प्राज्ञैरवज्ञायते ।

§ २४ ननु [ न ] परमार्था [2] स्थूलाद्याकारा. बाधकसद्भावात् । तथा हि—स्थूलाकारोऽवयवी, साधारणाकार सामान्यम् । तत्र चैकस्यावयविनोऽनेकेष्ववयवेषु[3] सामान्यस्यैकस्य अनेकव्यक्तिषु वृत्ति परैरिष्टा, प्रत्याश्रय किमेकदेशेन, सर्वात्मना वा स्यात् प्रकारान्तराभावात् । समवायः प्रकारान्तरमिति चेत्; न; अयुतसिद्धेषु वर्तते समवैति इत्यनयोरर्थभेदाभावात् । तत्रैकमनेकत्र वर्तमानं प्रत्यधिकरण न तावदेकदेशेन, नि.प्रदेशत्वात् । नापि सर्वात्मना , अवयव्यादिबहुत्वप्रसगात्; यावन्तोऽवयवादयस्तावन्तोऽवयव्यादय स्युः, तेषा प्रत्येक सर्वात्मना वृत्तत्वात् ।

§ २५ अथ प्रदेशवत्त्व मन्येत अवयव्यादीना तत्रापि वृत्तिविकल्पोऽनवस्था च । तथा चावयव्यादि सर्व तदेकमेव न स्यादिति वृत्तेर्दोषस्य बाधकस्य भावादिति चेत्; तदसत्, भेदैकान्तवादिनामेव[4] प्रतिपादितदोषोपनिपातात् । स्याद्वादिभिरपि—

"एकस्यानेकवृत्तिर्न भागाभावाद्बहूनि वा ।
भागित्वाद्वास्य नैकत्वं दोषो वृत्तेरनार्हते ॥"

[ आप्तमी० श्लोक० ६२ ] इति

[2]तान् प्रति तद्दोषप्रतिपादनात् ।

§ २६ नन्वेव वृत्तेर्दोष स्याद्वादिना च प्रसज्यत इति चेत्; तर्हि नाय प्रसगोऽनेकान्ते कथचित्तादात्म्यात् वेद्यवेदकाकारज्ञानवत्[5] । यथैव हि ज्ञानस्य वेद्यवेदकाकाराभ्या तादात्म्यम्, अशक्यविवेचनत्वात् 'किमेकदेशेन सर्वात्मना वा' इति विकल्पयोर्न विज्ञानस्य सावयवत्वं बहुत्वं वा [6]प्रसज्येत, अनवस्था वा, तथा अवयव्यादेरप्यवयवादिभ्यस्तादात्म्यमशक्यविवेचनत्वादेव नैकदेशेन प्रत्येक सर्वात्मना[7] वा; यतस्ताथागत सर्वथा भेद इव अवयवावयव्यादीना कथचित्तादात्म्येऽपि वृत्ति दूषयेत् ।

§ २७ यदत्रान्यदप्युक्तम्—न परमार्थ. स्थूलाकार परमाणूना सबन्धासिद्धे तेषामेकदेशेन सबन्धे दिग्भागभेदादनुषट्केन युगपद्योगे षडशतापत्ते; सर्वात्मना सबन्धे प्रचयस्यैकपरमाणुमात्र-

१ प्रत्याख्यान निरसन प्रत्यादेशो निराकृति श्रा० टि० । २ नैयायिकान् प्रति वृत्तिविकल्पदोषस्य ।

1 —रप्यासेया— क० । 2. ननु परमा— क० । 3 –वयेषु क० । 4 –वेदिना क०, ख० । 5 वेद्यवेदनाकार–ग० । 6 प्रसज्यते ख०, ग० । 7. प्रत्येक असर्वा— क० ।

त्वापत्तेरिति, तदपि दूषण परमाणूनामनन्यथै[1]कान्तवादिना[1] स्यान्न पुनः स्याद्वादिनाम् । यथैव हि नैयायिकादय. 'परमाणवो विविक्तावस्थावत् प्रचयावस्थायामपि परमाणुत्व न त्यजन्ति' इति मन्यन्ते न तथा स्याद्वादिनो येन तद्दोषस्तेषामनुषज्येत; तै परमाणूना स्निग्धरूक्षाणामजघन्यगुणाना द्व्यधिकादिगुणाना विजातीयाना सजातीयाना च [2]सक्तुतोयवत् सतप्तजतुखण्डवत् कथंचित् स्कन्धाकार-परिणामात्मकस्य सबन्धस्याभ्युपगमात् ।

[2]"लुक्खस्स[3] लुक्खेण दुवाहिएण,
णिद्धस्स णिद्धेण दुवाहिएण ।
णिद्धस्स लुक्खेण हवेइ[4] बन्धो,
जहण्णवज्जे विसमे समे वा ॥"

[ ] इति वचनात् ।

§ २८ [3]परैरप्येवमभ्युपगम. कर्तव्य , अन्यथा अर्थक्रियाविरोधात्, अणूनामन्योन्यम-सबन्धतो जलधारणाहरणाद्यर्थक्रियाकारित्वानुपपत्ते । रज्जुवशदण्डादीनामेकदेशापकर्षणे तदन्या-कर्षणे चासबन्धवादिनो न स्यात् । अस्ति चैतत् सर्वम् , विकल्पप्रतिभासिन प्रत्यक्षदृष्टत्वसिद्धे' अदृष्टे विकल्पायोगात्, अन्यथातिप्रसगस्योक्तप्रायत्वात् । असबद्धपरमाणुमात्रग्राहिप्रत्यक्षादि-प्रमाणाभावस्य प्रतिपादितत्वाच्च[5] । ततो जलाहरणाद्यर्थक्रियान्यथानुपपत्ते. सबन्धासिद्ध ।[6]

§ २९ किं च, एव वदत चित्रज्ञाननिर्भासलवविशेषाणामेकदेशेन सर्वात्मनापि सबन्धा-सिद्धे सकलनीलादिनिर्भासावयवव्याप्येकत्व तत्र[7] न सिद्ध्येत् । तदवयवपृथक्त्वकल्पनाया चित्रैकज्ञानव्यवहारो मा भृत्; पृथग्वर्णान्तरविषयानेकसतानैकैकक्षणवत् । तत्र प्रत्यासत्तिविशेष कथचिदैक्यात्कोऽपर. स्यात्; देशप्रत्यासत्ते शीतवातादिभि व्यभिचारात्; कालप्रत्यासत्तेरेक-समयवर्तिभिरशेषार्थैरनेकान्तात् भावप्रत्यासत्तेरेकार्थोद्भूतानेकपुरुषज्ञानैरनैकान्तिकत्वात् , द्रव्यप्रत्या-सत्तिरेव पारिशेष्यात् सभाव्यते । सा चैकद्रव्यतादात्म्यलक्षणत्वात् प्रत्यासत्तिविशेष इति कथचिदै-क्यमेवैकत्वव्यवहारनिबन्धन चित्रज्ञानस्य ।

§ ३० तदेव प्रमाणप्रसिद्धचित्रज्ञानवत् सूक्ष्मस्थूलात्मनि जात्यन्तरे[4] स्याद्वादीष्टवस्तुनि वृत्ति-दोषाद्यखिलदोषो नावकाश[8] लभते । अत्रान्यत्र च सर्वत्र विरोधादिदूषण चित्रज्ञानमेवापहस्तयतीति किं नश्चिन्तया । तत स्याद्वादीना[9] समत स्थूलाकार परमार्थ एव सिद्ध. । एतेन तदभिमत साधारणाकारोऽपि परमार्थतया सिद्ध स्याद्वादिसमतस्य सदृशपरिणामलक्षणस्य सामान्यस्याप्रति-क्षेपार्हत्वात् , अन्यथा शुक्तिकादे रजताद्यपेक्षया साधर्म्य[10]दर्शनस्याभावात्, कथ तन्निबन्धनस्तत्र

---

१ परमाणव परमाणव एव न तु अन्यरूपा अवयविरूपा वा भवन्ति इत्येकान्तवादिनाम् ।
२ रूक्षस्य रूक्षेण द्व्याधिकेन, स्निग्धस्य स्निग्धेन द्व्याधिकेन । स्निग्धस्य रूक्षेण भवति बन्ध , जघन्यवर्ज्ये विषमे समे वा ॥ उद्धृतम्—सर्वा० पृ० ३०७ । ३ बौद्धैरपि । ४ कथचित् नित्यानित्यात्मनि ।

1 -मनन्यतैकान्त–ग० । 2 जघन्यगुणाना विजातीयाना च सक्तु क०, ख० । 3 लक्ख क०, ख० । 4 उवेइ क०, ख० । 5 –पादित्वाच्च क०, ख० । 6 सबन्ध सिद्ध. । 7 -वयव्याप्येतत्व तत्र क०, ख० । 8 वावकाश क०, ख० । 9 वादि स– ग० । 10 साधर्म– क०, ख० ।

रूप्या[१]ध्यारोप, यत इद सूक्तं भवेत्।

"शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात्॥"

[ प्र० वा० १।४५ ] इति

§ ३१ न च साधर्म्यादपर सामान्यमस्ति, तस्य नित्यव्यापिस्वभावस्य क्वचिदप्यप्रतिवेदनात्। तथा स्याद्वादिसमत[1] स्थिराकार[2] परमार्थ एव, चित्रज्ञानस्यैकस्य युगपदनेकाकारव्यापित्ववत् क्रमेणाप्येकस्यात्मादेरनेकाकारव्यापित्वसिद्धे। तथैवोक्त भट्टाकलङ्कदेवै —

"यथैकं भिन्नदेशार्थान् कुर्याद्व्याप्नोति वा सकृत्।
तथैकं भिन्नकालार्थान् कुर्याद् व्याप्नोति वा क्रमात्॥"

[ लघी० श्लो० ३७ ] इति

पूर्वोत्तरक्षणाना सर्वथानिरन्वयत्वे[२] अर्थक्रियाविरोधाच्च। न हि क्षणक्षयैकान्तपक्षे अर्थक्रियोपपन्ना; बहिरन्तरर्थाना निरन्वयविनाशे कार्यस्य निर्हेतुकत्वापत्तेर्जन्मविरोधसिद्धे.।

§ ३२ ननु पूर्वक्षणादुत्तरक्षणस्य प्रादुर्भावात् कुतो निष्कारणत्व कार्यस्येति चेत्; न; [३]कार्यकालमप्राप्नुवत कारणत्वानुपपत्ते, चिरतरातीतवत्।

§ ३३. ननु कार्यकाल प्राप्नुवतोऽपि न कारणत्वम्, अन्यथा सर्वस्य समानक्षणवर्तिनस्तत्कारणत्वप्रसगात्। ततो यदन्वयव्यतिरेकानुविधायि कार्य[3] तदेव तस्य कारणम् "नाननुकृतान्वयव्यतिरेकं कारणम्।" [ ] इति वचनात् इति चेत्, न; क्षणक्षयैकान्ते अन्वयव्यतिरेकस्यैवाघटनात्।

§ ३४ न खलु समर्थे कारणे [4]सत्यभावत स्वयमेव पश्चादभवतस्तदन्वयव्यतिरेकानुविधान नाम नित्यवत्। 'स्वदेशवत् स्वकाले सति समर्थे कारणे कार्य जायते नासति' इत्येतावता क्षणिकपक्षे अन्वयव्यतिरेकानुविधाने नित्येऽपि [४]तत् स्यात्; स्वकालेऽनाद्यनन्ते सति समर्थे नित्ये स्वसमये कार्यस्योत्पत्तेरसत्यनुत्पत्तेश्च प्रतीयमानत्वात्।

§ ३५ सर्वदा नित्ये समर्थे सति स्वकाल एव कार्य भवत् कथ तदन्वयव्यतिरेकानुविधायीति चेत्; तर्हि कारणक्षणात्[5] पूर्व पश्चाच्चानाद्यनन्ते तदभावेऽविशिष्टे[6] क्वचिदेव तदभावसमये भवत् कार्य कथ तदनुविधायीति समानम्। नित्यस्य प्रतिक्षणमनेककार्यकारित्वे क्रमशोऽनेकस्वभावत्वसिद्धे. कथमेकत्व स्यादिति चेत्; क्षणिकस्य कथमिति सम पर्यनुयोग। स हि क्षणस्थितिरेकोऽपि भावोऽनेकस्वभावो विचित्रकार्यत्वात् नानार्थक्षणवत्।

§ ३६, न हि कारणशक्तिभेदमन्तरेण कार्यनानात्व युक्त रूपादिज्ञानवत्। यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादि[7]स्वभावभेदनिबन्धनानि तथा क्षणस्थितेरेकस्मात् प्रदीपादिक्षणात् वर्तिकादाहतैलशोषादिविचित्रकार्याणि शक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते, अन्यथा रूपादेरपि नानात्व न स्यात्।

---

१ रूप्यम्—रजतम्। २ एकद्रव्यान्वयाभावे। ३ तुलना—अष्टश० अष्टस० पृ० ८७। ४ अन्वयव्यतिरेकानुविधानम्।

1 स्याद्वादादि क०, ख०। 2 स्थिराकारोऽपि ग०। 3 विधायि तदेवस्य- क०, ख०। 4. -भावत क०। 5. -णक्षयात् क०, ख०। 6. -भावे विशिष्टे क०। 7. रूपादे स्व- क०, ख०।

§ ३७ ननु च शक्तिमतोऽर्थान्तरानर्थान्तरपक्षयो[१] शक्तीनामघटनात्तासा[1] परमार्थसत्त्वाभाव ; तर्हि रूपादीनामपि प्रतीतिसिद्धद्रव्यादर्थान्तरानर्थान्तरविकल्पयोरसभवात् परमार्थसत्त्वाभावः स्यात् । स्याद्वादिभिश्चित्रज्ञानवत् जात्यन्तरस्य शक्तिमतोऽर्थस्योपगमाच्च नोक्तदोषानुषङ्ग ।

§ ३८. अथ प्रत्यक्षबुद्धौ प्रतिभासमानत्वाद्रूपादय परमार्थसन्तो न पुनस्तच्छक्तयस्तासामनुमानबुद्धौ प्रतिभासमानत्वात् ; इत्यप्ययुक्तम्; क्षणक्षयस्वर्गप्रापणशक्त्यादीनामपरमार्थसत्त्वप्रसगात् । ततो यथा क्षणिकस्य युगपदनेककार्यकारित्वेऽप्येकत्वाविरोधस्तथा अक्षणिकस्य क्रमशोऽनेककार्यकारित्वेऽपीत्यनवद्य स्थिराकारोऽपि परमार्थ इति ।

§ ३९ तदेव सकलबाधकाभावादप्रतिक्षेपार्हाणामार्हताभिमताना स्थिरस्थूलसाधारणाकाराणा[2] परमार्थत्वसिद्धे [3] अभ्रान्तेन तद्ग्राहिप्रत्यक्षेण स्वलक्षणलक्षणतत्त्वस्य विरुद्धत्व सिद्ध्यत्येव ।

§ ४० ननु नैप दोष , सौगताभिमतस्वलक्षणतत्त्वस्य अवाच्यत्वादिति चेत्; तदसगतम्; अवाच्यशब्देन स्वलक्षणतत्त्वस्य वाच्यत्वात् स्ववचनेनैव स्वप्रतिज्ञा[4]हानेर्दर्शनात् ।

§ ४१ नन्ववाच्य[5]शब्देनापि न स्वलक्षणस्वरूपमुच्यते [२]तेनारोपितसामान्याकारस्यैवाभिधानादिति चेत्, व्याहतमेतत् । सामान्याख्यपररूपवाचिना अवाच्यशब्देन स्वलक्षणस्वरूपाभिधानस्य विरुद्धत्वात् नीलशब्देन पीताभिधानवत् । तदुक्त युक्त्यनुशासने स्वामिभि.—

**"अवाच्यमित्यत्र[6] च वाच्यभावादवाच्यमेवेत्ययथाप्रतिज्ञम् ।**
**स्वरूपतश्चेत् पररूपवाचि स्वरूपवाचीति वचो विरुद्धम् ।"**

[ युक्त्यनु० श्लो० २९ ] इति

§ ४२ ततो नावाच्यतैकान्तः श्रेयानिति कथमपि प्रत्यक्षविरोधो दु शक. परिहर्तुम् । तस्मात् सुव्यवस्थितेय [३]प्रतिज्ञा दृष्टविरुद्ध शाक्यशासनमिति ।

§ ४३. तथा ताथागतशासनमिष्टविरुद्धम् । तदभिमतक्षणक्षयैकान्तविरुद्धस्य आत्मादीना कथचिन्नित्यत्वस्यानुमानेन साधनात् । तथा हि—यत् सत् तत्सर्व कथचिन्नित्यम्, सर्वथा क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् सत्त्वानुपपत्ते' इति । अत्र न तावद्धेतोरनैकान्तिकत्वम्; सर्वथा नित्यत्वे सत्त्वस्याभावात् , सर्वथा क्षणिकत्ववत् । तदभावश्च क्रमाक्रमानुपपत्ते । तदनुपपत्तिश्च पूर्वापरस्वभावत्यागोपादानान्वितरूपाभावात्, सकृदनेकशक्त्यात्मकत्वाभावाच्च । न हि कूटस्थे पूर्वोत्तरस्वभावत्यागोपादाने स्त , क्षणिके चान्वित रूपमस्ति यत क्रम. [7]कालकृतो देशकृतो वा स्यात् । नापि युगपदनेकस्वभावत्व यतो यौगपद्यम्, कौटस्थ्यविरोधात्, सर्वथैकरूपत्वात् कूटस्थस्य । **"एकरूपतया तु यस्त्रिकालव्यापी स. [8]कूटस्थः"** [ ] इत्यभिधानात्, निरन्वयक्षणिकत्वव्याघाताच्च, तथा क्रमाक्रमानेकान्तात्मकस्यैव सिद्धे । सहकारिक्रमाक्रमापेक्षया [४]तत्र क्रमयौगपद्यकल्पनापि न साधीयसी; स्वय [५]तदपेक्षाक्रमेतरस्वभावत्वाभावे तदनुपपत्ते ।

१ भेदाभेदपक्षयो । २ शब्देन । ३ बौद्धेन कृता यत शाक्यशासन दृष्टविरुद्धमिति । ४ नित्ये । ५ सहकार्यपेक्षा स्वय तत्स्वभावस्यैव सभाव्यते ।

1 –टनात्ताना पर– क० । 2 –लपाधारणाकारणा क० । 3 सिद्धि क०, ख० । 4 –नैव प्रतिज्ञा क०, ख० । 5 नन्वाच्य– क०, ख० । 6 —मित्यस्य ग० । 7 क्रम क०, ग० । 8 —तया तु य कालव्यापि सकूटस्थ क०, ख० ।

§ ४४. तत्कार्याणा तदपेक्षा न पुनर्नित्यस्य क्षणिकस्य चेत्यपि न श्रेय'; तेषा तदकार्यत्व-प्रसगात् ।

§ ४५ तत्सहितेभ्य. सहकारिभ्य कार्याणामुत्पत्ते., अन्यथाऽनुत्पत्तेस्तत्कार्यत्वनिर्णय. इति चेत् तर्हि येन स्वभावेनैकेन सहकारिणा सहभाव' तेनैव सर्वसहकारिणा यदि तस्य स्यात् तदैक-कार्यकरणे सर्वकार्यकरणात् क्रमकार्यानुत्पत्ति । सहकार्यन्तराभावेऽपि च तत्सहभावात् सकृदेव सकलकार्योत्पत्ति. प्रसज्येत । स्वभावान्तरै. सहकार्यन्तरसहभावे तस्य क्रमाक्रमवृत्त्यनेकस्वभावत्व-सिद्धे कुतो नित्यमेकत्वस्वभाव[1] क्षणिक वा[2] वस्तु क्रमयौगपद्ययोर्व्यापक स्यात्, कथचिन्नित्यस्यैव क्रमाक्रमानेकस्वभावस्य तद्व्यापकत्वप्रतीते. ।

§ ४६ एतेन विपक्षे हेतोर्बाधकस्य व्यापकानुपलम्भस्य[1] व्यतिरेकनिश्चयः कथचिन्नित्ये प्रत्यक्षप्रवृत्तेः प्रदर्शित' प्रत्येयः । तत सत्त्व[3] कथचिन्नित्यमेव साधयतीति सिद्ध शौद्धोदनिशासन-मिष्टविरुद्धमिति ।

§ ४७ तथा च शुभाशुभानुष्ठान-पुण्य पाप-श्वभ्र-स्वर्गादि-परलोक--बन्ध--बन्धकारण-मोक्ष-मोक्षकारण-बन्धमोक्षफल-बद्ध[4]-मुक्तादिपरोक्षतत्कारणस्वरूपप्रतिपादकोऽपि बौद्धागमो न प्रमा-णम्, दृष्टेष्टविरुद्धागमसमकर्तृकस्य तस्यातीन्द्रिये[5]ष्वतितरामप्रामाण्यापत्तेरिति[6] न बौद्धाना धर्मानु-ष्ठानं प्रतिष्ठामियर्ति । किं बहुना, बौद्धैर्यद्यदभिधीयते तत्सर्वमसदेव तदभिमतसर्वतत्त्वस्य शून्यत्वात् ।

§ ४८ तथा हि [2]विकल्पोऽभिलापसबन्धार्थग्रहणरूप परैरिष्ट । स च नास्त्येव । न हि तावद्विषयस्याभिलापेन तद्गतेनैव सबन्ध, तत्र तदभावात् । स्मरणोपनीतेन [7]सकेतकालप्रतिपन्ने-नेति चेत्; न, स्मरणस्य निर्विकल्पकत्वे तद्विषयस्य स्वलक्षणत्वे न क्वचिदुपनयनानुपपत्ते । व्यव-सायरूपत्वे च तेनापि स्वविषयोऽभिलापसबन्ध एव स्मर्तव्य । तदभिलापोऽपि तथाविध एव तत्स्मरणेनेत्यनवस्थितिप्रसगात । स्मरणस्य तदनभिसबन्ध[8]वस्तुवेदित्वेऽपि व्यवसायस्वभावत्वे प्रत्यक्षस्यापि तत्किं न स्यात्, '[9]स्वाभिधानविशेषापेक्षया एवार्था निश्चयैर्व्यवसीयन्ते' इत्येकान्त-त्यागात् । नाम्न स्वलक्षणस्यापि स्वाभिधानविशेषानपेक्षस्यैव व्यवसायवचनात् ।

§ ४९ एवमनवस्थादिदोषोपनिपातान्नामस्मरणोभावेन क्वचिद्विकल्पा न [10]सिद्ध्येत् । स्मरणो-पनीतनामसबद्धार्थग्रहणस्यैव[11] विकल्पत्वात्[12] । विकल्पाभावेन न[13] क्वचित्प्रत्यक्षम् । अकृतविक-ल्पेन प्रत्यक्षेण बहिरन्तर्वा गृहीतस्याप्यगृहीतकल्पत्वात् क्षणक्षयादिसवेदनवत् । प्रत्यक्षाभावे न क्वचिदनुमानम् [14]प्रत्यक्षपूर्वकत्वात्तस्येति सकलप्रमाणाभाव । [3]तदभावे सकलप्रमेयाभाव, प्रमाणापाये प्रमेयव्यवस्थानुपपत्तेरिति सौगताभिमत सर्व तत्त्व शून्यमेव स्यात् ।

१. क्रमाक्रमयोर्व्यापकयोरनुपलम्भ । २ "विकल्पो नाम सश्रय" [ प्र० वा० २।१२३ ] इत्यभिधानात् । ३ प्रमाणाभावे ।

1 –मेकस्व-, ग० । 2. भावा क० । 3 सत्त्वम् क०, ख० । 4 –मोक्षबद्ध- ख० । 5 –षति- क०, ख० । 6 प्रामाण्योपपत्तेरि- क०, ख० । 7 –नीते स ख० । 8 सबद्ध- क०, ख० । 9 माभि –क०, ख० । 10 –कल्प सिद्ध्येत् ग० । 11 सबन्धार्थ– ग० । 12 विकल्पात् क०, ख० । 13 'न' ख प्रतौ नास्ति । 14 –मानप्रत्यक्षकत्वात् क०, ख० ।

§ ५० तथा च सौगतो हेयोपादेयोपायरहितोऽयमह्रीक केवल विक्रोशतीत्युपेक्षार्ह एवेति कृतमतिविस्तरेण, दृष्टेष्टविरुद्धत्वात्तन्मतस्यासत्यत्वसिद्धे ।

दृष्टेष्टेषु दृष्टेष्टविरोधात् सुगतोदित ।
परोक्षेषु तदेकत्वादागमो न प्रमाणताम् ॥
विकल्पाभावत. सर्वहानेर्बौद्धवचोऽखिलम् ।
भवेत्प्रलापमात्रत्वान्नावधेय विपश्चिताम् ॥
दृष्टेष्टाभ्या विरुद्धत्वान्न सत्य शाक्यशासनम् ।
न च तेन प्रतिक्षेप स्याद्वादस्येति[1] निश्चितम् ॥

[ इति बौद्धशासनपरीक्षा ]



1 –दश्चेति –क० ख० ।

# [ सांख्यशासन-परीक्षा ]

[ पूर्वपक्ष ]

§१ तथा साख्यशासनमपिदृष्टेष्टविरुद्धम् । एव हि [1]तावदाख्यान्ति साख्या — सर्वमिद जगत्प्रधानमयम्;[१] प्रधान च सत्त्वरजस्तमसा साम्यावस्थास्वरूपम् । तथा च तद्ग्रन्था'—

**"सत्त्वं लघुप्रकाशकमिष्टमवष्टम्भकं चलं च रजः ।**
**गुरुवरणकमेव तम. साम्यावस्था भवेत्प्रकृतिः ॥"**

[ साख्यका० १३ ]

§ २ तत्र यदिष्ट प्रकाशक लघु तत्सत्त्वमित्युच्यते । सत्त्वोदयात् प्रशस्ता एव परिणामा जायन्ते । यच्च चल[२]मवष्टम्भक दारक ग्राहक वा तद्रज इत्युच्यते । रजस उदयाद्रागपरिणामा एव जायन्ते । यद्गुरु आवरणकमज्ञानहेतुभूत तत्तम इति निरूप्यते । तमस उदयात् द्वेषादज्ञानपरिणामा एव जायन्ते । सत्त्वरजस्तमसा साम्यावस्था प्रकृति ।

**"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।**
**तस्मादपि षोडशकात् पञ्चभ्य. पञ्चभूतानि ॥"**

[ साख्यका० २२ ]

§३. जगदुत्पादिका प्रकृतिः, 'प्रधान बहुधानकम्' इति प्रकृतेरभिधानानि । तत प्रकृतेर्महानुत्पद्यते । आसर्गप्रलयस्थायिनी बुद्धिर्महान् । ततो महत सकाशादहकार उत्पद्यते । 'अह ज्ञाता[3], अह सुखी, अह दु'खी' इत्यादि प्रत्ययविषय । ततोऽहकाराद् गन्धरसरूपस्पर्शशब्दा [4], पञ्चतन्मात्रा , स्पर्शन-रसन-घ्राण-चक्षु-श्रोत्राणि पञ्चबुद्धीन्द्रियाणि, वाक्-पाणि-पादपायूपस्थानि[३] पञ्चकर्मेन्द्रियाणि, मनश्चेति षोडशगणा. समुत्पद्यन्ते । तेषु षोडशगणेषु [5] पञ्चतन्मात्रेभ्य. पञ्चभूतानि समुत्पद्यन्ते ।

§ ४ तद्यथा—गन्धरूपरसस्पर्शेभ्य पृथिवी, रसरूपस्पर्शेभ्यो जलम्, रूपस्पर्शाभ्या तेज , स्पर्शाद्वायु , शब्दादाकाश. समुत्पद्यत इति सृष्टिक्रमः । एतानि चतुर्विंशतितत्त्वानि । पञ्चविंशको जीव । षड्विंशक' परम[४] इति निरीश्वरसाख्या । षड्विंशको महेश्वर , सप्तविंशतिः परम इति सेश्वरसाख्या । तेषु तत्त्वेषु—

**"मूलप्रकृतिरविकृतिर्महादाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष. ॥"**

[ साख्यका० ३ ]

१ प्रधानमिति प्रकृतेर्नामान्तरम् । २ मलविसर्जनद्वारम् । ३ मूत्रविसर्जनेन्द्रियम् । ४ मुक्त. ।

1 एव तावदा क०, ख० । 2 जलम- क०, ख० । 3 ज्ञात्वा क०, ख० । 4 स्पर्शनश- क०, ख० । 5 गुणेषु क० ।

§ ५. इत्येव प्रकृतिपुरुषयोर्भेदविज्ञानात् प्रकृतिनिवृत्तौ पुरुषस्य सुषुप्तपुरुषवदव्यक्त-चैतन्योपयोगेन[1] स्वरूपमात्रावस्थानलक्षणो मोक्ष । तस्य चोपायः पञ्चविंशतितत्त्वपरिज्ञानमेव ।

"पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे स्थितः।
जटी मुण्डी शिखी केशी मुच्यते नात्र संशयः[१] ॥"

[ ] इति वचनात्

[ उत्तरपक्ष ]

§ ६. तदेतत्कपिलमत दृष्टविरुद्धम् । तथा हि—तावत्पुरुषव्यतिरिक्तसर्वार्थाः प्रधानमयाः कापिलैरिष्टा । तच्च प्रधान सर्वदा वर्तते नित्यत्वात्, सर्वत्र च वर्तते तस्य व्यापकत्वेनाभ्युपगमात्, सर्वत्र च सपूर्णतया वर्तते तस्य सर्वथानिरवयवत्वेनेष्टत्वात् । तथा च 'सर्व सर्वत्र वर्तते' इत्या-यातम् । 'सर्वमय प्रधान सर्वत्र साकल्येन वर्तते' इत्यभ्युपगमे 'सर्व सर्वत्र वर्तते'इत्यस्यावश्यमभ्यु-पगन्तव्यत्वात् ।

§ ७ नन्विष्टापादनमिद सर्व सर्वत्र चास्त इति कापिलैरङ्गीकरणादिति चेत्; तदिद हि स्पष्ट दृष्टविरुद्धम् ; प्रत्यक्षेण प्रतिनियतदेशकालस्यैवार्थस्य दर्शनात् । न हि प्रत्यक्षेण सर्व सर्वत्र दृश्यते । अङ्गुल्यग्रे हस्तियूथशतादेरपि दर्शनप्रसगात् ।

§ ८ ननु नैष दोषः सर्वस्य सर्वत्र सद्भावेऽपि यत्र यस्याविर्भाव स एव तत्र दृश्यते न पुनरन्यस्तिरोहित, इत्यर्थाना दर्शनयोग्यायोग्यत्वव्यवस्थितेरिति चेत्, कोऽयमाविर्भावो नाम—प्रागनुपलब्धस्य व्यञ्जकव्यापारादुपलम्भ इति चेत्; स च नित्यो वाऽनित्यो वा; यद्यनित्यः, तदा स प्रागसन् कारणै क्रियेत, अन्यथा नित्यत्वप्रसगात्, तथा च घटादिरपि तद्वत् प्रागसन् कारणै क्रियताम्,[2] न चैव, सत्कार्यवादविरोधात् । आविर्भाव प्रागसन् कारणै क्रियेत न[3] पुनर्घटादिरिति स्वरुचिवचनमात्र निरुपपत्तिकत्वात् । यदि नित्य, तदा तदेव सर्वत्र सर्वस्य दर्शन स्यात्, आवि-र्भावस्य सदा सत्त्वात् ।

§ ९ अथाविर्भावस्य प्राक्तिरोहितस्य सत एव [4]कारणैराविर्भावान्तरमिष्यते, तर्हि तस्या-प्यन्यत्तस्याप्यन्यदाविर्भावनमित्यनवस्थानान्न कदाचित् घटादेराविर्भाव [5] स्यात् ।

§ १० अथाविर्भावस्योपलम्भरूपस्य तद्रूपाविर्भावान्तरानपेक्षत्वात्[6] प्रकाशस्य प्रकाशान्त-रानपेक्षत्ववन्नानवस्थेति मतम्; तर्हि तस्य कारणस्य कारणादात्मलाभोऽ[7]भ्युपगन्तव्य, उत्पत्ति-अभिव्यक्तिभ्यां प्रकारान्तराभावात् तत्र चोक्तदोष इति नाविर्भाव सिद्ध्येत् ।

§ ११ यत्तेन तिरोभावेऽपि[8] प्रत्यादिष्टप्राय[9] तस्य नित्यानित्यपक्षयोरुक्तदोषानुषङ्गात् । आविर्भावस्य निरस्तत्वेन तृतीयपक्षस्य चाऽसभवात् । एवमाविर्भावतिरोभावयोरसिद्धौ तद्वशात् क्वचित्कस्यचित् प्रतीतेरनुपपत्ते सर्व सर्वत्र दृश्यताम् । न चैवम्, इति प्रत्यक्षविरोधस्तदवस्थ [10]एव ।

१ श्लोकोऽयं सांख्यका० माठरवृत्तौ 'यदुक्तम्' इति कृत्वा उद्धृत ।

1 चैतस्योप- क०, चैतन्ययोगेन ख० । 2 क्रियाम् क०, ख० । 3 क्रिये न क० । 4 एवाकारणै ग० । 5 कदाचिर्व- क० । 6 -तरापेक्ष- क० । 7. लाभोऽप्युप- क० । 8 -भावोऽपि ग० । 9 -धिष्ट क० । 10 -वस्थ वा क०, ख० ।

§ १२. तथा सत्युपलब्धियोग्यत्वे सत्यनुपलब्धे नास्ति प्रधानम् । तदभावे तन्निमित्तका महदादयोऽपि न सिद्ध्येयुरिति सर्वाभाव । तथापि यदि वैय्यात्यात्[1] महदादिसृष्टिप्रक्रियोच्यते, तदाय प्रष्टव्य —किमिद महदादिकं प्रधानस्य कार्य वा परिणामो वेति, प्रथमपक्षे न तावत् सतस्तस्य कार्यत्वम् ; सर्वथा सत कारणवैय्यर्थात् पुरुषवत् ।

"यदि सत् सर्वथा[2] कार्यं पुंवन्नोत्पत्तुमर्हति ।"

[ आप्तमी० श्लो० ३९ ] इति वचनात् ।

नाप्यसत ;

"असदकरणादुपादानग्रहणात् सर्वसंभवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥"

[ सांख्यका० ९ ]

इति स्वसिद्धान्तविरोधात् । सर्वथाप्यसत उत्पत्तिविरोधाच्च ।

"यद्यसत्सर्वथा कार्यं तन्माजनि खपुष्पवत् ।"

[ आप्तमी० श्लो० ४२ ] इति वचनात् ।

§ १३ द्वितीयपक्षे परिणामिनो वहुधानकस्य परिणामा महदादयोऽत्यन्तं भिन्ना वा स्यु अभिन्ना वा, तत्र परिणामाना तदभिन्न ना [5]क्रमशो वृत्तिर्मा भूत् परिणामिनोऽक्रमत्वात् । ततो भिन्नाना व्यपदेशो न स्यात् सबन्धासिद्धेरनुपकारकत्वात् ।

§ १४ न तावत् प्रधान परिणामानामुपकारकम्; तत्कृतोपकारान्तरस्य कार्यत्वे सदसत्पक्षोक्तदोषानुषगात् । परिणामत्वेतरभिन्नाना क्रमोत्पत्तिर्मा भूत् । भिन्नाना व्यपदेशो न स्यात् सबन्धासिद्धेरनुपकारात् । उपकारान्तरकल्पनायामनवस्थाप्रसगात् । परिणामै प्रधानस्योपकारे यावन्तो हि परिणामास्तावन्तस्तस्योपकारास्तत्कृतास्ततो यदि भिन्ना , तदा तस्येति व्यपदेशोऽपि मा भूत् सबन्धासिद्धेरनुपकारकत्वात् । [6]तद्वतस्तैरुपकारान्तरेऽपि स एव पर्यनुयोग इत्यनवस्था । ततस्ते यद्यभिन्नास्तदा तावद्धा प्रधान भिद्येत । ते वा प्रधानैकरूपता प्रतिपद्येरन्निति प्रधानस्योपकाराणा चावस्थानासम्भव ।

§ १५ अथ न भिन्नो नाप्यभिन्न परिणाम केवलं महदादिरूपेण प्रधान परिणमते दण्डकुण्डलाद्याकारै सर्पवदिति चेत् , तदेतत् स्वेष्टनित्यैकान्तबाधकम् ; पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणामाभ्युपगमे [7]नित्यानित्यात्मकत्वस्यावश्यम्भावात् ।

§ १६ तदेवमनेकबाधकोपनिपातात्[8] प्रधानादिचतुर्विंशतितत्त्वानि न व्यवतिष्ठन्ते । तदव्यवस्थितौ भोग्याभावे पुंसो भोक्तृत्वाभावादभाव स्यात्तस्य तल्लक्षणत्वात् । तत प्रकृतिपुरुषतत्त्वयोरवस्थानाभावात् साख्याभिमत सर्वं तत्त्व पुनरपि शून्यं जायत इति तत्कथं प्रत्यक्षसिद्ध स्यात् ;

१ विपरीताग्रहात् । २ पुरुषस्य ।

1 करणवै- क०, ख० । 2 सर्वदा क० । 3. इति सिद्धान्त ग० । 4 परणामिनो क०, ख० । 5 क्रमतो ग० । 6 तद्वतस्तैरकालैरुप- ग० । 7. यात्मक क० । 8. -को निपातात क०, ख० ।

स्यात्, उर्वीपर्वततर्वादिपदार्थाना ब्रह्ममयत्ववत् प्रधानमयत्वस्यापि प्रत्यक्षेणानुपलक्षणात् सिद्ध साख्यशासनं दृष्टविरुद्धम्।

§ १७. तथा तदिष्टविरुद्धं च। कापिलाभिमतस्य कूटस्थनित्यपुरुषस्य कथंचित्तदनित्यत्वसाधकानुमानेन विरुद्धत्वात्। तच्चेदम्—विवादापन्न पुरुष स्यादनित्य, अनित्यभोगाभिन्नत्वात्। यदित्थ तदित्थ दृष्टम्; यथा भोगस्वरूपमिति। नासिद्धं, भोगस्यानित्यत्वम्, 'अनित्यो भोग. उत्पत्तिमत्त्वात्, ज्ञानवत्' इत्यनुमानात्तत्सिद्धे[1]।

§ १८ कथमुत्पत्तिमान् भोग इति चेत्, परापेक्षत्वात्तद्वदेव परापेक्षोऽसौ बुद्ध्यध्यवसायापेक्षत्वात्। **"बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते"** [ ] इति वचनात्। भोगस्य बुद्ध्यध्यवसायानपेक्षत्वे पुसः सर्वत्र सर्वदा सर्वभोगप्रसगात्। भोग्यसनिधिसव्यपेक्षतया [2]कादाचित्कत्वाच्चानित्यः सिद्धो भोग। तस्य च पुरुषाद् भेदे तेन तस्य गगनादेरिव पुरुषान्तरस्यैव वा भोक्तृत्वानुपपत्ते। ततो भोगस्याभेदे तद्रूपतया पुरुषस्य कथचिदनित्यत्व सिद्ध्यतीति सम्यगिदं साधनमात्मानित्यत्वं साधयति। ततः सूक्तम्—साख्यमतमिष्टविरुद्धमिति।

§ १९. तथा चतुर्विधवर्णाश्रमतत्तद्विधेयविविधाचारपुण्य-पाप-परलोक-बन्ध-मोक्ष-तत्कारण-तत्फल-बद्ध-मुक्तादिस्वरूपप्रतिपादकः साख्यागमो न प्रमाण दृष्टेष्टविरुद्धागमाभिन्नस्य तस्य परोक्षतत्कारणेषु प्रामाण्यसभावनानुपपत्तेरिति न तेषा धर्मानुष्ठान प्रतिष्ठामियर्ति। किमत्र बहुनोक्तेन यत् किंचित् सेश्वरनिरीश्वरसाख्यैरसख्यावद्भिराख्यायते तत्सर्वं मृषैव, तदभिमतसकलतत्त्वानामा[3]विर्भावाद्यपाकरणद्वारेण शून्यत्वस्यापादितत्वादित्यल प्रसगेन, दृष्टेष्टविरुद्धत्वात् साख्यशासनस्यासत्यत्वसिद्धेः।

दृष्टेष्टेषु[4] दृष्टेष्टविरोधात् साख्यसंमत।
परोक्षेषु तदेकत्वादागमो न प्रमाणताम्[5]॥
आविर्भावच्युतौ सर्वच्युतेः साख्यवचोऽखिलम्।
भवेत् प्रलापमात्रत्वात् नावधेय विपश्चिताम्॥
न साख्यशासनं सत्य दृष्टदृष्टेष्टबाधतः।
न च तेन प्रतिक्षेप. स्याद्वादस्येति निश्चितम्॥

[ इति सांख्यशासन-परीक्षा ]

१. पुरुषात्।

1. -मानात्सिद्धे' क०, ख०। 2 कदाचित्- क०, ख०। 3 तत्त्वामावि- क०। 4. दृष्टेष्विष्टेषु ख०, ग०। 5 प्रमाण्यताम् क०, ग०। 6 -दश्चेति क०, ख०।

## [ वैशेषिकशासन-परीक्षा ]

[ पूर्वपक्ष ]

§ १ अथ वैशेषिकमतमपि दृष्टेष्टविरुद्धम् । तावदिदं हि तेषामाकूतम्—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवानामात्मविशेष[1]गुणानामत्यन्तोच्छित्तावात्मनः स्वात्मन्यवस्थानं मोक्षः[1], अन्यथा आत्मनोऽत्यन्तविशुद्ध्यभावादिति । "द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं[2] निःश्रेयसहेतुः ।" [ प्रश० भा० पृ० ६ ] शैवपाशुपतादिदीक्षाग्रहण-जटाधारण-त्रिकालभस्मोद्धूलनादितपोऽनुष्ठानविशेषश्च ।

§ २ "तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि सामान्यविशेषसंज्ञोक्तानि नवैव । तद्व्यतिरेकेण संज्ञान्तरानभिधानात् ।" "गुणाः रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्व-अपरत्व-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्नाश्च कण्ठोक्ताः सप्तदश, चशब्दसमुच्चिताश्च गुरुत्व-द्रवत्व-स्नेह-संस्कारादृष्टशब्दाः सप्तैवेत्येवं चतुर्विंशतिगुणाः ।" [ प्रश० भा०, पृ० १० ] "उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानीति पञ्चैव कर्माणि । गमनग्रहणाद्भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यक्पतननमनोन्नमनादयो गमनविशेषा न जात्यन्तराणि[3] ।" [ प्रश० भा०, पृ० ११ ] "सामान्यं द्विविधम्, परमपरं चानुवृत्तिप्रत्ययकारणम् ।

§ ३ "तत्र परं सत्ता महाविषयत्वात्, सा चानुवृत्तेरेव हेतुत्वात् सामान्यमेव । द्रव्यत्वाद्यपरम् अल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात्सामान्यं सद्विशेषाख्यामपि लभते । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । ते खल्वत्यन्तव्यावृत्तिबुद्धिहेतुत्वात् विशेषा एव । अयुतसिद्धानामाधार्याधारभूतानां यः संबन्ध इह प्रत्ययहेतुः स समवायः ।

§ ४. "एवं धर्मैर्विना धर्मिणामुद्देशः कृतः । षण्णामपि पदार्थानां साधर्म्यमस्तित्वमभिधेयत्वं ज्ञेयत्वम् । आश्रितत्वं चान्यत्र नित्यद्रव्येभ्यः[4] । द्रव्यादीनां पञ्चानामपि समवायित्वमनेकत्वं च । 'गुणादीनां पञ्चानामपि[2] निर्गुणत्व-निष्क्रियत्वे ।" [प्रश० भा०, पृ० ११–१६] इत्याद्यनेकविधं साधर्म्यं वैधर्म्यं चेति तत्त्वज्ञानं मोक्षहेतुः । तद्यथा, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये[3] तदनन्तराभावादपवर्गः ।" [ न्यायसू० १।१।२ ]

§ ५ तत्र तत्त्वज्ञानान्मिथ्याज्ञानं निवर्तते; मिथ्याज्ञाननिवृत्तौ तज्जन्यरागद्वेषनिवृत्तिः; तद्दोषनिवृत्तौ तज्जन्यकायवाङ्मनोव्यापाररूपप्रवृत्तिनिवृत्तिः[4]; तत्प्रवृत्तिनिवृत्तौ तज्जन्यपुण्यपाप-

१ 'नवानामात्मविशेषगुणानामत्यन्तोच्छित्तिर्मोक्षः ।'—प्रश० व्यो० पृ० ६३८ । २ 'धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ।'—वैशे० सू० १।१।४। ३. किं तु गमन एवान्तर्भूतानि । ४. नित्यद्रव्याणि न कार्यद्रव्यवत् स्वकारणाश्रितानि भवन्ति ।

1 नवानामात्मगुणविशेषाणाम् क०, ख० । 2 —दीनामपि क०, ख० । 3 —त्तरपाये क०, ख० । 4 प्रवृत्तिनिवर्तते ख० ।

बन्धलक्षणजन्मनिवृत्तिरित्यागामिकर्मबन्धनिवृत्तिस्तत्त्वज्ञानादेव भवति। प्रागुपार्जिताशेषकर्मपरिक्षयस्तु भोगादेव नान्यथा। तथा चोक्तम्—

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।
अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ॥"

[ ] इति

§ ६ तत्रापि—

"कुर्वन्नात्मस्वरूपज्ञः भोगात्कर्मपरिक्षयम्।[1]
युगकोटिसहस्राणि कृत्वा तेन विमुच्यते ॥"

[ ]

इत्येकः पक्षः।

"आत्मनो वै शरीराणि बहूनि मनुजेश्वरः।
प्राप्य योगबलं कुर्यात् तैश्च सर्वा महीं चरेत्[2] ॥
भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्।
संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव ॥"

[ ] इति

एकस्मिन्नेव भवे बहुभिः शरीरैः प्रागुपार्जिताशेषफलभोग इत्यपरः पक्षः। ततश्च भोगात् प्रागुपार्जिताशेषकर्मपरिक्षये[3] एकविंशतिभेदभिन्नदुःखनिवृत्तिरिति।

§ ७. तानि दुःखानि कानीति चेत्[4],

"संसर्गः सुखदुःखे च तथा[था]र्थेन्द्रियबुद्धयः।
प्रत्येकं षड्विधाश्चेति दुःखसंख्यैकविंशतिः ॥"

[ ] इति

सकलपुण्यपापपरिक्षयात् तत्पूर्वकबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराणामपि परिक्षये आत्मनः कैवल्यं मोक्ष इति।

[ उत्तरपक्षः ]

§ ८ तदेतदौलूक्यशासनं[5] तावत् [6]दृष्टविरुद्धम्। तदभिमतस्यावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्भेदैकान्तस्य तदभेदग्राहिणा प्रत्यक्षेण [7]विरुद्धत्वात्।

§ ९ न ह्यवयव्यादिरवयवादिभ्यः सर्वथा भिन्न एव प्रत्यक्षे प्रतिभासते, अपि तु कथंचिदभिन्न एव। तन्तुभ्यः तदातानवितानावस्थाविशेषरूपस्य पटस्य [8]कर्पट्यादेश्चित्रज्ञाने नीलादिनिर्भासवत्, तत्रैकलोलीभावमुपगतानां[9] रूपादीनां गच्छत, पुरुषाद् बाल्यादिवत्, स्थित्यादिवद्वा तदवस्थाविशेषभूतक्रियायाः सामान्यवतोऽर्थाद् वैसादृश्यवत्तद्धर्मभूतसादृश्यलक्षणसामान्यस्य अनर्थान्तरतया सकललोकसाक्षिकमध्यक्षेणादध्यवसायात्[10]।

---

1 –परीक्षयम् क०। 2 इदं पद्यं क०, ख० प्रतौ नास्ति। 3. –कर्मपरिकर्मक्षये क०, ख०। 4. तानि चेत् ग०। 5. -लुक्यशा क०। 6 -न दृष्ट- ग०। 7 प्रत्यक्षेणावि- ग०। 8 चित्रपट्यादौ इत्यर्थः। कर्कट्यादे क०, ख। 9 लोविभा- ग०। 10 –णाध्यवसायात् क०, ख०।

§ १०. ननु समवायात्तेभ्योऽवय[1]व्यादिरर्थान्तरमिव प्रतिभासत इति चेत्; न, अवयव्यादिप्रत्यक्षस्य सर्वत्र भ्रान्तत्वप्रसगात्, तिमिराशुभ्रमणनौयानसंक्षोभाद्याहितविभ्रमस्य [1]धावद्धादिदर्शनवदसदाकारविशिष्टार्थग्रहणात्। तथा चाव्यभिचारित्वं [2]प्रत्यक्षलक्षणमसंभवि स्यात्।

§ ११ न चैते अवयवादय, इमे अवयव्यादय, समवायश्च तेषामयमिति प्रत्यक्षबुद्धौ [3]विस्रसा भिन्ना सकृदपि प्रतीयन्ते प्रत्यक्षता च स्वीकर्तुमिच्छन्तीति तेऽमी अमूल्यदानक्रयिण; प्रत्यक्षबुद्धावात्मानर्पणेन प्रत्यक्षतास्वीकरणात्।

§ १२. न च [2]परोपवर्णितस्वरूपः समवाय एव व्यवतिष्ठते। यतो भिन्नानाममेदप्रतिभास इष्यते। तथा हि नित्यव्यापकैकरूपतया परैरभिमत स समवाय समवाय्याश्रितोऽनाश्रितो वा, यदाश्रित तदा परमार्थत, उपचाराद्वा, तत्र न परमार्थत समवाय समवाय्याश्रितः [4]तयो संबन्धाभावात्। न हि तावत्तयो समवाय सबन्ध; समवायस्यैकत्वात्। समवायस्य समवायान्तरेण वृत्तौ तस्यापि तदन्तरेणैव [3]वृत्तिरित्यनवस्थोपनिपातात्। नापि सयोग, तस्य [5] गुणत्वेन द्रव्याश्रितत्वात्, द्रव्यत्वाच्च समवायस्य। नापि विशेषणविशेष्यभाव.; सबन्धान्तराभिसबद्धार्थेष्वेवास्य [6] प्रवृत्तिप्रतीते दण्डपुरुषादिवत्, अन्यथा सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात्। न च समवायसमवायिना संबन्धान्तराभिसबद्ध[4]त्वम्; संयोगसमवाययोरनभ्युपगमात् विशेषणविशेष्यभावान्तरेण सबद्धत्वे तस्यापि तदन्तरेण संबद्धेष्वेव प्रवृत्तिरित्यनवस्थानात्। नाप्यदृष्टम्, षोढा [7] संबन्धवादित्वव्याघातात्। यदि चादृष्टेन समवायः सबद्ध्येत्; तर्हि गुणगुण्या[5]दयोऽप्यत [8] एव संबद्धा भविष्यन्तीत्यल समवायादिकल्पनयेति न सबन्धान्तरेण समवायस्य सबन्ध सिद्ध्यति।

§ १३ ननु न [6]समवायस्य सबन्धान्तरेण सबन्धोऽस्माभिरिष्ट येनानवस्थादिदोषा. स्यु, अपि तु अग्नेरुष्णतावत् स्वत एवास्य सबन्धो युक्त स्वत एव सबन्धरूपत्वात्, न संयोगादीना [9]तदभावात्। न ह्येकस्य स्वभावोऽन्यस्यापि, अन्यथा स्वतोऽग्नेरुष्णत्वदर्शनात् जलादीनापि तत्स्यादिति चेत्; तदपि प्रलापमात्रम्; यत प्रत्यक्षप्रसिद्धे पदार्थस्वभावे स्वभावैरुत्तरं वक्तुं युक्तम्।

"प्रत्यक्षेण प्रतीतेऽर्थे यदि पर्यनुयुज्यते।
स्वभावैरुत्तर वाच्यं दृष्टे काऽनुपपन्नता॥"

[ ] इति वचनात्।

अन्यथा तथोत्तरेण[10] सर्वस्य स्वेष्टसिद्धिप्रसगात्।

§ १४. न च समवायस्य स्वत संबन्धत्व सयोगादीना तु तस्मादित्यध्यक्षप्रसिद्धम्; तत्स्वरूपस्याध्यक्षागोचरत्वप्रतिपादनात्। "अत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्, स्वात्मगतसंवेदनाभावाच्च।" [प्रश० भा० पृ० ६९७] इति[11] प्रशस्तपादभाष्येऽभिधानात्।

१ गच्छद्वृक्षादिदर्शनवत्। २ 'इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्' –न्यायसू० १।१।४। ३. स्वभावेन। ४ समवाय-समवायिनो। ५ सयोगस्य। ६. विशेषणविशेष्यभावस्य। ७ सयोग, सयुक्तसमवाय, सयुक्तसमवेतसमवायः, समवाय, समवेतसमवाय, विशेषण विशेष्यभावश्चेति। ८ अदृष्टादेव। ९ स्वत संबन्धरूपत्वाभावात्। १०. 'स्वभावात्' इत्युत्तरेण। ११ 'तस्मादिह बुद्ध्यनुमेय समवाय.' –प्रश० भा०।

1. एतदन्तर्गत पाठ क०, ख० प्रतौ नास्ति। 2 रोक्षर्व–क०, ख०। 3 वृत्तिरित्यवस्थो– ख०। 4 समवन्धत्वम् क०। 5 गुणादयोऽपि ग०। 6 ननु सम– क०, ख०।

'समवाय पदार्थान्तरेण सबद्ध्यमानो न स्वत' संबद्ध्यते संबद्ध्यमानत्वात् रूपादिवत्' इत्यनुमानविरोधाच्च ।

§ १५ यदि चाग्नि-प्रदीपश्च मासादीनामुष्णप्रकाशाशुचित्ववत् समवाय स्वपरयो' सम्बन्धहेतु', तर्हि तद्दृष्टान्तावष्टम्भेनैव ज्ञानं स्वपरयो प्रकाशहेतु' किं न स्यात्; तथा च **"ज्ञानं ज्ञानान्तरवेद्यं प्रमेयत्वात्"** [ ] इति विप्लवते ।

§ १६. किं च, यथा अर्थाना [1]सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति एवं द्रव्यादीना [2]वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिरिति मन्वानः पदार्थाना [3]सवेदनात्मकस्य ज्ञानस्य नान्यत. सवेदनम् , तस्मात् स्वत' सवेदनमिति किं न मन्येत, भाववत्तादात्म्याविशेषात् । तदविशेषेऽपि सत्तादृष्टान्तेन समवायस्यैव स्वतो वृत्तिः स्यान्न पुनर्ज्ञानस्य स्वसंवेदनमिति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम् । स्वतः सबन्ध इव स्वत सवेदनेऽपि स्वात्मनि क्रियाविरोधाभावात् , अन्यथा तत्रापि तत्प्रसंगात् । तस्यैकस्यैव संघटनीय-सघटकत्वभावात् ।

§ १७ यच्चोच्यते—समवायः संबन्धान्तरं नापेक्षते स्वतः संबन्धत्वात्; ये तु संबन्धान्तरमपेक्षन्ते न ते स्वत सबन्धा , यथा घटादय , न चायं न स्वतः सबन्धः, तस्मात्सबन्धान्तरं नापेक्षत इति; तदपि मनोरथमात्रम्; सयोगेनानेकान्तात् । स हि स्वत सबन्ध. सबन्धान्तरं चापेक्षते । न हि स्वतोऽसबन्धस्वभावत्वे सयोगादे [2]परतस्तद्युक्तम्; अतिप्रसगात् । 'समवायः पदार्थान्तरेण सश्लेषे सबन्धान्तरमपेक्षते, पदार्थान्तरत्वात् , यदित्थं [ तदित्थ ], यथा सयोगः, तथा चायम्, तस्मात्तथैव, इत्यनुमानबाधितविषयत्वाच्च ।

§ १८ किं च, यथा समवायः स्वरूपापेक्षयाऽभेदात् तद्व्यतिरिक्तघटनीय-घटकाकारापेक्षया भेदाभेदाद्भेदात्मक सिद्ध्यति, तथावयव्याद्यपेक्षयाऽभेदात्तदपृथग्भूतावयवापेक्षयाभेदात् सर्वं वस्तु भेदाभेदात्मकं[4] जात्यन्तर सिद्ध्येत् , विरोधादिदूषणाना समवायदृष्टान्तेनापसारणात् इत्यर्हन्मतसिद्धि तस्य तदिष्टत्वात् ।

**"अभेदभेदात्मकमर्थतत्त्वं तव ।"** [ युक्त्यनु० श्लो० ७ ] इति वचनात् ।

तन्मतसिद्धौ 'पराभिमतभेदैकान्तरूप वस्तु खपुष्पवदसदेव स्यात् ।'

**"स्वतन्त्रान्यतरत् खपुष्पम्"** [ युक्त्यनु० श्लो० ७ ] इति वचनात् ।

§ १९ तदेव स्वत परतश्च समवायस्य समवायिषु वृत्तिर्न स्यात्, [3]अवृत्तिमत्त्वात् समवायवृत्तेर्न परमार्थत समवाय समवाय्याश्रित परैस्तस्य स्वातन्त्र्याभ्युपगमाच्च । नाप्युपचारात् , उपचारनिमित्ताभावात् ।

१ "तस्मात् ज्ञानान्तरसवेद्य सवेदन वेद्यत्वात् । घटादिवत्"—प्रश० व्यो० पृ० ५२९ । २ सबन्धस्वभावत्वम् । ३ अन्येन सबन्धेन सबद्धत्वाभावात् ।

1. यथा सदात्मक– क०, ख० । 2 एवं वृत्त्यात्मकस्य क०, ख० । 3 –मन्वान सवे– ख० । 4. –तु भेदात्मकं ग० ।

§ २० ननु निमित्तमुपचारस्य समवायिषु सत्सु समवायज्ञानम्, समवायिशून्यदेशे समवायज्ञानासंभवादिति चेत्; तदसत्, दिगादीनामप्येवमाश्रितत्वप्रसंगात्, मूर्तद्रव्येषु सत्सु उपलब्धिलक्षणप्राप्तेषु दिग्लिङ्गस्य 'इदमत·[1] पूर्वेण' इत्यादि प्रत्ययस्य काललिङ्गस्य च परत्वापरत्वादिप्रत्ययस्य सद्भावात मूर्तद्रव्याश्रितत्वोपचारप्रसंगात्। तथा च "अन्यत्र नित्यद्रव्येभ्यः" [प्रश० भा०, पृ० १६] इति वचनव्याघात·[2], नित्यद्रव्यस्यापि दिगादेरुपचारादाश्रितत्व[3]सिद्धे·। ततो नोपचारादप्याश्रितत्व समवायस्य।

§ २१ अथानाश्रित· समवाय· इति मतम्, तदा न संबन्ध· समवाय संबन्धिभ्यां भिन्नस्योभयाश्रितस्यैव[4] संयोगवत् संबन्धत्वव्यवस्थिते। तथा च प्रयोग —समवायो न संबन्ध सर्वथाऽनाश्रितत्वात्, यो यः सर्वथाऽनाश्रित· स स न संबन्ध, यथा दिगादि·, सर्वथाऽनाश्रितश्च समवाय, तस्मान्न संबन्ध इति। न चात्रासिद्धो हेतु, समवायस्य परमार्थत उपचाराच्चाश्रितत्वस्य निराकृतत्वात्।

§ २२ स्यादाकूतम्—समवायस्य धर्मिणोऽप्रतिपत्तौ हेतोराश्रयासिद्धत्वम्, प्रतिपत्तौ धर्मिग्राहकप्रमाणबाधितः पक्षो हेतुश्च कालात्ययापदिष्ट प्रसज्यते। समवायो हि यत· प्रमाणात्[5] प्रतिपन्नस्तत एवायुतसिद्धसंबन्धत्व प्रतिपन्नम् अयुतसिद्धानामेव संबन्धस्य समवायव्यपदेशसिद्धेरिति, तदपि न साधीय; समवायग्राहिणा प्रमाणेनाश्रितस्यैव समवायस्य अविष्वग्भावलक्षणस्य प्रतिपत्ते·,[6] तस्यानाश्रितत्वाभ्युपगमे च असंबन्धत्वस्य प्रसंगेन साधनस्य [8]साधनात्। साध्यसाधनयोर्व्याप्यव्यापकभावसिद्धौ परस्य व्याप्याभ्युपगमे [7]तन्नान्तरीयकस्य व्यापकाभ्युपगमस्य प्रतिपादनात्। न ह्याश्रितत्वमसंबन्धत्वेन व्याप्तं दिगादिष्वसिद्धम्। नाप्यनैकान्तिकम्· अनाश्रितस्य कस्यचित् संबन्धत्वाप्रसिद्धे विपक्षे वृत्त्यभावात्। तत एव न [9]विरुद्धं नापि सत्प्रतिपक्षम्· तस्यानाश्रितस्यापि संबन्धत्वव्यवस्थापकानुमानाभावादिति न परेषा समवायसंबन्धोऽस्ति, यतस्तद्वशादभिन्नानामप्यवयव्यादीनामभेदेन प्रतिपत्ति[10]रुपपद्येत। ततस्ते भेदेनैव प्रतियेरन्[11] न चैवमत· प्रत्यक्षविरोधो दु·शक· परिहर्तुं परेषाम्।

§ २३. किं च, प्रतिपादितप्रकारेण समवायस्यासंभवे संयोगस्याप्यसंभव· तस्य कार्यस्य कारणसमवायाभावेऽनुपपत्ते।

§ २४ एव संबन्धाभावे न किंचित् वस्तु भेदैकान्तवादिमते व्यवतिष्ठते। तथा हि—तावत् परमाणूनां संयोगाभावे द्व्यणुकादिप्रक्रमेणावयविनोऽनुत्पत्तेः[12] कार्यरूपभूतचतुष्टयाभाव·, तदभावे तत्कारण[3]चतुर्विधपरमाणवोऽपि न संभाव्यन्ते; कार्यलिङ्गत्वात् कारणस्य।

"कार्यभ्रान्तेरणुभ्रान्तिः कार्यलिङ्गं हि कारणम्।"

[ आप्तमी० श्लो० ६८ ]

१ उक्तानुमाने २ तदविनाभाविन। ३ कार्यभूतपृथिव्यादिकारण।

1 –स्यैकद्रमत क०, ख०। 2. वचनघात ग०। 3 –राद्याश्रित– क०। 4 –तस्यैकस्यैवा– क०, ख०। 5. प्रमाणाप्रतिपन्न क०, ख०। 6 प्रतिपत्ति क०, ग०। 7. असंबन्धस्य क०, ख०। 8 प्रसंगेन साधनात् ग०। 9 –च विरुद्धं क०, ख०। 10 प्रतीति– ख०। 11 प्रतियेतन् क०। 12 –विनोत्पत्ते क०, ख०।

इति वचनात्। तथा भूतचतुष्टयासत्त्वे [1]परापरादिप्रत्ययापायात्। '[1]इदमत पूर्वेण' [2]इत्यादि प्रत्ययापायाच्च [ न ] कालो दिक्च व्यवतिष्ठते । तथा [3]भेरीदण्डाद्याकाशसयोगाभावात् [2]सयोगजशब्दस्यानुत्पत्ति, सर्वत्रावयवसंयोगाभावे [4]तद्विभागस्याप्ययोगाद् विभागजशब्दस्याप्यनुत्पत्ति:; [5]तयोरनुदये शब्दजशब्दस्यासम्भव ; इति सकलशब्दानुत्पत्तेराकाशव्यवस्थापकोपायादाकाशहानि । तथा आत्मान्त करणसयोगासिद्धे बुद्ध्यादिगुणानुत्पत्ति ; तदभावे चात्मव्यवस्थाप-[3]कोपायासत्त्वादात्मतत्त्वहानि । तथा बुद्ध्यनुत्पत्तौ मनसोऽसिद्धि ; क्रमतो ज्ञानोत्पत्तेर्मनोलिङ्गत्वात्। **"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"** [ न्यायसू० १।१।१६ ] इति वचनात्।

§ २५ *एव सयोगाभावे सर्वद्रव्याभाव । अथवा समवायाभावे सत्तासमवायासंभवात् सर्वद्रव्य प्रच्युत: । सर्वद्रव्यहानौ तदाश्रितगुणकर्मसामान्यविशेषाणामसिद्धि' आश्रयाभावे सत्याश्रयिणा[म][4]भावात्, *[5]तन्त्वभावे पटाभाववदिति । ससर्गहाने. सकलार्थहानिर्दुर्निवारा वैशेपिकाणामुपनिपतति । तदुक्त स्वामिसमन्तभद्रपादै —

**"अभेदभेदात्मकमर्थतत्त्वं तव स्वतन्त्रान्यतरत्खपुष्पम् ।**
**अवृत्तिमत्त्वात् समवायवृत्तेः संसर्गहानेः सकलार्थहानिः ॥"**

[ युक्त्यनु० श्लो० ७ ] इति

§ २६ एव विचार्यमाणा सर्वथाभिन्नावयवावयव्यादय स्वयमेव न सन्ति यत प्रत्यक्षेण [6]प्रतिभासेरन्। तत्प्रत्यनीकाश्च [7]कथचिद्भिन्नास्ते[6] प्रत्यक्षत प्रतिभासन्त इति स्थित दृष्टविरुद्ध वैशेपिकमतमिति।

§ २७ तथा तदिष्टविरुद्धं च । तथा हि—विवादापन्न 'तनुकरणभुवनादिक बुद्धिमद्धेतुकं कार्यत्वात् घटादिवत्' इति जगतो महेश्वरकृतत्व यौगै. व्यवस्थाप्यते, तच्चानुमानविरुद्धम्, तद्बाधकानुमानसद्भावात्। तच्चेदम्—नेश्वरस्तन्वादीना कर्ता, अशरीरत्वात्, य एव स एवम्, यथात्मा, तथा चायम्, तस्मात्तथैवेति । न [8]चात्रासिद्धो हेतु', [7]तस्य शरीरत्वायोगात्। तच्छरीरस्य सावयवस्य[9] नित्यत्वानुपपत्ते. । [10]नित्यस्यापि तच्छरीरस्य बुद्धिमत्कारणापूर्वकत्वे तेनैव कार्यत्वादिहेतूना व्यभिचारात्। तस्य बुद्धिमत्कारणसपूर्वत्वे वा परापरशरीरकल्पनायामनवस्थाप्रसगात्। पूर्वपूर्वस्य शरीरेणोत्तरोत्तरस्वशरीरोत्पत्तौ [8]भवस्य निमित्तकारणत्वे सर्वससारि णा तथा प्रसिद्धेरीश्वरकल्पनावैयर्थ्यात्। स्वोपभोग्यभुवनाद्युत्पत्तावपि[11] तेषामेव निमित्तकारणत्वोपपत्तेरिति; तत् कार्यत्वाचेतनोपादानत्वसन्निवेशविशिष्टहेतवो गमका स्यु । **"अशरीरं वा[12]वसन्तं न प्रियाप्रिये स्पृशतः ।"** [ छान्दो० ८।१२।१ ] इत्यागमविरोधाच्च।

१ देशापेक्षया अपरस्मिन् पर युगपच्चिर क्षिप्रमिति कार्यलिङ्गानि । २ इदमतो दक्षिणेनेत्यादि । ३ भेर्याकाशसयोगो निमित्तकारणम् । ४ अवयवविभागस्यापि । ५ सयोगजविभागजशब्दयोरभावे । ६ अवयव्यादय । ७-८ ईश्वरस्य ।

1 प्रत्ययादिदमत क०, ख० । 2 सयोगशब्द– क०, ख० । 3 –कोपायसत्त्व– ग० । 4 —यिणाभावा– क०, ख० । 5 —एतदन्तर्गत' पाठ ग० प्रतौ नास्ति । 6 प्रत्यक्षे प्रति– क०, ख० । 7 कथचिदभिन्ना क०, ख० । 8 नात्रासिद्धो क०, ख० । 9 सावयस्य क०, ख० । 10 —तेरनित्यस्यापि ख० । 11 भुवनाद्युत्तावपि क०, ख० । 12 –र नावसन्त क०, ख० ।

§ २८. एवमशरीरत्वे सिद्धे नेश्वरस्तस्य तन्वादीनां कर्ता स्यात्, वितनुकरणस्य [1]तस्य तत्कृतेरयोगात्। तादृशोऽपि निमित्तभावे कर्मणामचेतनत्वेऽपि तन्निमित्तत्वमविप्रतिषिद्धम्, सर्वथा दृष्टान्तव्यतिक्रमात्। यथैव हि कुलालादिसतनुकरण. कुम्भादे. प्रयोजको दृष्टान्त तनुकरणभुवनादीनामशरीरेन्द्रियेश्वरप्रयोज[1]कत्वकल्पनयाव्यतिक्रम्यते तथा कर्मणामचेतनानामपि तन्निमित्तत्वं कल्पनया बुद्धिमानपि दृष्टान्तो व्यतिक्रम्यतां विशेषाभावात्।

§ २९. स्यान्मतम्—सशरीरस्यापि बुद्धीच्छाप्रयत्नवत एव—कुलालादेः [2]कारकप्रयोक्तृत्वं दृष्टम्, कुटादिकार्यं कर्तुमबुद्धयमानस्य तदर्शनात्, बुद्धिमतोऽपीच्छापाये तदनुपलब्धे; तदिच्छावतोऽपि प्रयत्नाभावे [2]तदनुपलम्भात्; तद्वद्वितनुकरणस्यापि बुद्धिमत स्रष्टुमिच्छत. प्रयत्नवतः शश्वदीश्वरस्य समस्तकारकप्रयोक्तृत्वोपपत्तेर्न दृष्टान्तव्यतिक्रमः, सशरीरत्वेतरयोः कारकप्रयुक्ति प्रत्यनङ्गत्वात्। न हि सर्वथा दृष्टान्तदार्ष्टान्तिकयो साम्यमस्ति, तद्विशेषविरोधादिति; तदयुक्तम्, बुद्ध्यादीनामपि [3]तस्या[3]सम्भवात्। ईश्वरो ज्ञानचिकीर्षाप्रयत्नत्रयवान्न भवति; अशरीरत्वात्; मुक्तात्मवदिति तदभावसिद्धे.। अशरीरत्वाविशेषेऽपि सादिमुक्तानामेव बुद्ध्यादिरहितत्व न त्वनादिमुक्तस्येश्वरस्येति चेत्; न, अनादिमुक्तसिद्धे.। 'ईश्वरस्याशरीरत्व सादि अशरीरत्वात् मुक्तात्माऽशरीरत्ववत्' इति तद्बाधकसद्भावात्। अत्राप्यशरीरत्वाविशेषेऽपि मुक्तात्माशरीरत्वमेव सादि न त्वीश्वराशरीरत्वमिति चेत्; न, अनुपपत्तिकत्वात्; जगत्कर्तृत्वसर्वज्ञत्वादीनामीश्वरविशेषणाना विवादगोचरत्वे न ततो वैलक्षण्याभिधानानुपपत्ते। तथापि यदि तथेष्यते तर्हि कार्यत्वाविशेषेऽपि घट-पट-कट-कटक-शकट-मुकुटादीना बुद्धिमद्धेतुकत्वं न तु मही-महीधर-महीरुहादीनामिति किं नेष्यते। [4]अकृतसमयस्यापि कृतबुद्ध्युत्पादकेभ्यो घटादिभ्यः [5]तदनुत्पादकभुवनादीनां वैलक्षण्यस्यापि संभवात्। एवमशरीरत्वे बुद्धीच्छाप्रयत्नवत्त्वासिद्धे तदसिद्धौ सकलकारकप्रयोक्तृत्वानुपपत्ते. सूक्तमीश्वरस्तन्वादीनां न कर्तेति।

§ ३०. तथापि यदि वैय्यात्यादीश्वर कर्तेत्यभिधीयते तदा प्राणिनां विचित्रघोरदुःखशतानीश्वरः करोति वा, न वा, यदि न करोति तदा तै. कार्यत्वादिहेतूनां व्यभिचार.। अथ करोतीति मतम्, तदसंभाव्यम्; इह हि कश्चिदसर्वज्ञो प्रणष्टरागद्वेषो मुनिरन्यो वा साधु. परपीडा न करोति किल, स एव महर्षीणामप्याराध्य. सर्वज्ञो वीतरागद्वेषमोहो भगवान् महेश्वर प्राणिनामनिमित्तमसह्यविविधोग्रदु खपरम्परामुत्पाद्य जगत्त्रयं परिपीडयतीति कथमिदं प्रेक्षावद्भि. संभाव्यते। तत्करणे वा तस्य अत्युग्रापूर्वराक्षसत्वमेव, न तु महद्भिः स्तुत्यं महेश्वरत्वमिति तस्य तत्करणमसंभाव्यम्।

§ ३१. ननु [ न ] प्राणिनामीश्वरो[4] दु खमुत्पादयतीति चेत्; न; दु खहेतूनामपि पापकर्मणामीश्वरकृतत्वे तस्यैव [6]दु खहेतुत्वसिद्धेः, तत्पक्षोपक्षिप्तदोषानुषंगात्। तेषा [7] तदकृतत्वे तनुकरणादेरपि तत्कृतत्वं मा भूत्; विशेषाभावात्। कर्मभिरीश्वरसाधकहेतूनामनैकान्तिकत्वाच्च;

१. तनुकरणरहितस्य। २. कार्यकर्तृत्वाभावात्। ३. ईश्वरस्य। ४. अग्रहीतसंकेतस्यापि। ५. कृतबुद्ध्यनुत्पादक। ६ ईश्वरस्यैव। ७. कर्मणाम्।

1 –प्रजक– क०, ख०। 2 कारकः प्रयो– क०, ख०। 3 तस्य संभवात् क०। 4 –नादीश्वरो क०, ख०।

कर्मणामबुद्धिमन्निमित्तत्वेऽपि कार्यत्वार्थक्रियाकारित्वस्थित्वा(त्या) प्रवर्तनाना संभवात्। यदि [1]कल्पयित्वापीश्वरमवश्य कर्मानुमन्यते; तदा केवलं कर्मैव तनुकरणादिनिमित्तमिष्यताम्, किमनेनेश्वरेण प्रमाणबाधितेन, तथा च परेषा पारपर्यपरिश्रमपरिहारः स्यात्।

§ ३२ ननु कथमचेतनाना कर्मणा विचित्रोपभोगयोग्यतनुकरणाद्युत्पादकत्वमिति चेत्; कथमुन्मत्तमदिरामदनकोद्रवादीनामुन्मादादिविचित्रकार्योत्पादकत्वम्। कथ वा अयस्कान्तविशेषाणा लोहाकर्षणभ्रमणादि-कार्यकारित्वमित्यभिधीयताम्। तथादृष्टत्वादिति चेत्; तत एव प्रकृतः स्वभावव्यालम्भो[1]ऽपि निवर्त्यताम्। तथा 'सुखदुःखलाभालाभादीनामदृष्ट कारणमस्ति, दृष्टकारणव्यभिचारान्यथानुपपत्ते.' इत्यनुमितत्वात्। न चैवमीश्वरस्याप्यनुमितत्वादुपालम्भप्रसगनिवृत्तिः स्यादिति शङ्कनीयम्, तदनुमानस्यानेकदोषदुष्टत्वात्।

§ ३३ तथाहि—तनुकरणभुवनादे' कार्यत्वादिसाधन किमेकबुद्धिमत्कारणत्व साधयेत्, अनेकबुद्धिमत्कारण वा, प्रथमपक्षे प्रासादादिना अनेकसूत्रधारयजमानादिहेतुना तदनैकान्तिकम्। द्वितीयपक्षे सिद्धसाधनम्, नानाप्राणिनिमित्तत्वात्तदुपभोग्यतन्वादीनाम्, तेषा तददृष्टकृतत्वात्।

§ ३४ एतेन बुद्धिमत्कारणसामान्यसाधने सिद्धसाधनमुक्तम्; तदभिमतविशेषस्याधिकरणसिद्धान्तन्यायेनाप्यसिद्धे। सामान्यविशेषस्य साध्यत्वाददोष इति चेत्, न; दृष्टादृष्टविशेषाश्रयसामान्यविकल्पद्वयानतिवृत्ते। दृष्टविशेषाश्रयस्य सामान्यस्य साध्यत्वे स्वेष्टविघातात्। अदृष्टविशेषाश्रयस्य सामान्यस्य साध्यत्वे साध्यशून्यत्वप्रसगात्। निदर्शनाय दृष्टेतरविशेषाश्रयस्य सामान्यसाधनेऽपि स्वाभिमतविशेषसिद्धि. कुतः स्यात्।

§ ३५ अधिकरणसिद्धान्तन्यायादिति चेत्, कोऽयमधिकरणसिद्धान्तो[2] नाम, **यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः"** [न्यासू० १।१।३०] ततो दृष्टादृष्टविशेषाश्रयसामान्यमात्रस्य बुद्धिमन्निमित्तस्य जगत्सु प्रसिद्धौ प्रकरणाज्जगन्निर्माणसमर्थ समस्तकारकाणा प्रयोक्ता सर्वदाऽविलुप्तशक्तिर्विभुरशरी[2]रत्वादिविशेषाश्रय एव सिद्धयतीति चेत्, स्यादेवम्, यदि सकलजगन्निर्माणसमर्थेनैकेन समस्तकारकाणा प्रयोक्त्रा सर्वज्ञत्वादिविशेषोऽपि तेनाविनाभाविदृष्टेतरविशेषाधिकरणबुद्धिमत्कारणसामान्य कुतश्चित्सिद्धयेत्; न च सिद्धयति; अनेकबुद्धिमत्कारणेनैव स्वोपभोग्यतन्वादिनिमित्तकारणविशेषेण तस्य व्याप्तत्वसिद्धे समर्थनात्। तथा सर्वज्ञवीतरागकर्तृकत्वे साध्ये घटादिना अनैकान्तिक साधनम्। साध्यविकल च निदर्शनम्। सरागसर्वज्ञकर्तृकत्वे साध्ये अपसिद्धान्त। सर्वथा कार्यत्व च साधन तन्वादावसिद्धम्, तस्य[3] कथचित् कारणत्वात्। कथचित् कार्यत्व तु विरुद्धम्, सर्वथा बुद्धिमन्निमित्तत्वात् साध्याद्विपरीतस्य कथचिबुद्धिमन्निमित्तत्वस्य साधनात्। तथा पक्षोऽप्यनुमानबाधित स्यात् 'नेश्वरस्तन्वादीना कर्ता ज्ञानादिरहितत्वात्, मुक्तवत्,' इति प्रागुक्तानुमानस्य तद्बाधकस्य भावादिति, जगतो बुद्धिमद्धेतुकत्व न सिद्धयति, साधकस्याभावाद् बाधकस्य संभवाद्। ततः सूक्तमिष्टविरुद्ध वैशेषिकमतमिति।

[ इति वैशेषिकशासन-परीक्षा ]

१. व्युत्क्रमेण आ समन्तात् लम्भ प्राप्ति। २ यत्सिद्धौ अन्यप्रकरणसिद्धि सोऽधिकरणसिद्धान्त। ३ तन्वादे।

1 –प इत्वा क०, ख०। 2 –र्विभूं शरीर क०, ख०।

## [ नैयायिकशासन-परीक्षा ]

[ पूर्वपक्ष. ]

§ १. वैशेषिकसमसिद्धान्ता नैयायिकास्त्वेवमामनन्ति—

"प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।"

[ न्यायसू० १।१।१ ]

§ २ किं च, भक्तियोग-क्रियायोग-ज्ञानयोगत्रयैर्यथासंख्यं सालोक्यं सारूप्य सामीप्यं सायुज्य मुक्तिर्भवति ।

§ ३ तत्र महेश्वर. स्वामी स्वयं भृत्य इति तच्चित्तो भृत्वा यावज्जीवं तस्य परिचर्याकरणं भक्तियोग., तस्मात्सालोक्यमुक्तिर्भवति ।

§ ४. तप स्वाध्यायानुष्ठानं क्रियायोग' । तत्रोन्मादकादिव्यपोहार्थमाध्यात्मिकादिदु खसहिष्णुत्वं तप , प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यास स्वाध्याय , तदुभयमपि क्लेशकर्मक्षयाय समाधिलाभाय चानुष्ठेयम् । तस्मात्क्रियायोगात् सारूप्यं सामीप्यं वा मुक्तिर्भवति । विदितपदार्थस्येश्वरप्रणिधान[1] ज्ञानयोग' ।

§ ५. परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनं पर्यालोचनमीश्वरप्रणिधानम् । तस्य योगस्य यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधय अष्टाङ्गानि । तत्र देशकालावस्थाभिरनियता' पुरुषस्य विशुद्धवृत्तिहेतवो यमा' । अहिंसाब्रह्मचर्यास्तेयादय' देशकालावस्थापेक्षिणः पुण्यहेतव क्रियाविशेषा नियमाः देवार्चन-प्रदक्षिण-संध्योपासन-जपादय । योगकर्मविरोधिक्लेशजपाद्यर्थश्च रणबन्धः आसनम् । पद्मकस्वस्तिकादे' कोष्ठस्य वायोर्गतिच्छेद प्राणायामः रेचकपूरककुम्भकप्रकार. शनैःशनैरभ्यसनीय । समाधिप्रत्यनीकेभ्य समन्तात्[2] स्वान्तस्य व्यावर्तनं प्रत्याहार. । चित्तस्य देशसंबन्धो धारणा । तत्रैकतानता ध्यानम् । ध्यानोत्कर्षान्निर्वाताचलप्रदीपावस्थानमिवैकत्र चेतसावस्थानं समाधि । एतानि योगान्तानि मुमुक्षुणा महेश्वरे परा भक्तिमाश्रित्याभियोगेन सेवितव्यानि । ततोऽचिरेण कालेन भवन्तमनौपम्यस्वभावं प्रत्यक्ष पश्यति; तं दृष्ट्वा निरतिशयं सायुज्य नि श्रेयसं प्राप्नोति ।

[ उत्तरपक्ष' ]

§ ६. तदेतत्तार्किकमतं दृष्टेष्टविरुद्धम् । प्रागनन्तरं प्रतिपादितप्रकारेणैव प्रत्यक्षानुमानविरोधयोरत्राप्युपपत्त., अतो नात्र पृथक् तद्विरोधसमर्थनमुपक्रम्यते ।

§ ७. किं च, तदभ्युपगतपदार्थेषु इन्द्रियबुद्धिमनसाम् अर्थोपलब्धिसाधकत्वेन[1] प्रमाणत्वात् प्रमेयेष्वन्तर्भावानुपपत्ते., अन्यथैकानेकात्मकत्वसिद्धे । संशयादीना प्रमेयत्वे[2] च व्यवस्थानानुपपत्ते. । विपर्ययानध्यवसाययो प्रमाणादिषोडशपदार्थेभ्योऽर्थान्तरभूतयो प्रतीतेश्च न षोडशपदार्थव्यवस्था ।

---

१ तत्त्वतेनैव । २ प्रमाणाविषयत्वे ।

1, प्रणिधानं द० । 2 समन्तात् क० ।

§ ८. तथैव नैयायिकवैशेषिकसिद्धान्तस्य दृष्टेष्टविरुद्धत्वे सिद्धे चतुर्विधवर्णाश्रमवत् तदविधेयविविधाचारपुण्यपापपरलोकबन्धमोक्षतत्कारणतत्फलबद्धमुक्तादिस्वरूपप्रतिपादकोऽपि यौगागमो न प्रमाणम्, दृष्टेष्टविरुद्धागमाभिन्नस्य तस्यातीन्द्रियेषु तत्कारणेषु च प्रामाण्यसभावनानुपपत्तेरिति न तेषां धर्मानुष्ठानं प्रतिष्ठामियर्ति । किं वा बहुभिरालापैः औलूक्यैः तार्किकैश्च लौकिकं वैदिकं वा यत्किंचिदुच्यते तत्सर्वं मृषैव तदभिमतसर्वतत्त्वानां समर्गासंभवेन[१] शून्यत्वस्यापादितत्वादित्यलमतिप्रपञ्चेन, दृष्टेष्टविरुद्धत्वान्नैयायिकवैशेषिकमतयोरसत्यत्वसिद्धत्वात् ।

दृष्टेष्विष्टेषु दृष्टेष्टविरोधाद्यौगसंमतः ।
परोक्षेषु तदेकत्वादागमो न प्रमाणताम् ॥
संसर्गहानेः सर्वार्थहानेर्यौगवचोऽखिलम् ।
भवेत्प्रलापमात्रत्वान्नावधेयं विपश्चिताम् ॥
दृष्टेष्टाभ्यां विरुद्धत्वान्न सत्यं यौगशासनम् ।
न च तेन प्रतिक्षेपः स्याद्वादस्येति[1] निश्चितम् ॥

[ इति नैयायिकशासन-परीक्षा ]

१ समवायादिसम्बन्धाभावेन ।

1 द्वाश्चेति क०, ख० ।

## [ मीमांसक-भाट्टप्राभाकरशासन-परीक्षा ]

[ पूर्वपक्षः ]

§ १ अथ मीमांसकमतमपि दृष्टेष्टविरुद्धम् । मीमांसकेषु तावदेवं भाट्टा भणन्ति—'पृथिव्यप्तेजोवायुदिक्कालाकाशात्ममनःशब्दतमांसि' इत्येकादशैव पदार्थाः, तदाश्रितगुणकर्मसामान्यादीनां तत्स्वभावत्वेन तादात्म्यसंभवान्न पदार्थान्तरमित्येवं पदार्थयाथात्म्यज्ञानात् कर्मक्षयो भवतीति ।

§ २. प्राभाकरास्तु—

"द्रव्यं गुणः क्रिया जातिसंख्यासादृश्यशक्तयः ।
समवायः क्रमश्चेति नव स्युर्गुरुदर्शने ॥"

[ ]

तत्र द्रव्या[1] [णि पृथिव्यादयः,] गुणा रूपादयः क्रिया उत्क्षेपणादि । जातिः सत्ता द्रव्यत्वादि । संख्या एकत्वद्वित्वादि । सादृश्यं गोप्रतियोगिकं गवयगतमन्यत्, गवयप्रतियोगिकं गोगतं सादृश्यमन्यत् । शक्तिः सामर्थ्यम्, सा अनुमेयैव[2] । गुणगुण्यादीनां संबन्धः समवायः । एकस्य निष्पादनानन्तरमन्यस्य निष्पादनं क्रमः, प्रथमाहुत्यादिपूर्णाहुतिपर्यन्तम् । इत्येवं नवैव पदार्थाः । एतेषां याथात्म्यज्ञानान्निःश्रेयससिद्धिरित्याचक्षते ।

§ ३ किं च, वेदमधीत्य तदर्थं ज्ञात्वा तदुक्तनित्यनैमित्तककाम्यनिषिद्धानुष्ठानक्रमं निश्चित्य तत्र विहितानुष्ठाने यः प्रवर्तते तस्य स्वर्गापवर्गसिद्धिर्भवति । त्रिकालसंध्योपासनजपदेवर्षिपितृतर्पणादिकं नित्यानुष्ठानम् । दर्शपौर्णमासग्रहणादिषु क्रियमाणनैमित्तकानुष्ठानम् । तद्द्वयमपि नियमेन कर्तव्यम् । कुतः,

"अकुर्वन् विहितं कर्म प्रत्यवायेन[१] लिप्यते ।"

[ ] इति वचनात् ।

पुत्रकाम्येष्ट्यादिकमैहिकं काम्यानुष्ठानम् । ज्योतिष्टोमादिकमामुत्रिकं काम्यानुष्ठानम् । '[२]श्येनाभिचरन् यजेत्,' इत्यादिकं निषिद्धानुष्ठानम् । तत्क्रमं निश्चित्य तेष्वनुष्ठानेषु विहितानुष्ठाने यः प्रवर्तते स स्वर्गापवर्गौ प्राप्नोति ।

§ ४. अपि च—

"न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः[3] ।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥"[३]

[ ] इति वचनात् ।

मुमुक्षुणा प्रव्रज्यया भवितव्यमिति नियमो नास्ति ।

१ पापेन । २ श्येनयागेन । ३. गृहस्थो मोक्षमार्गस्थो इत्यादि । तुलना—रत्नक० श्लो०

1 द्रव्यादि गुणरूपादय क०, ग० । 2 सानुमेयैव क०, ग० । 3 निष्ठातिथि क० ।

§ ५. तत्रापि—

"मोक्षार्थी न [1]प्रवर्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ॥"

[ मी० श्लो० सबन्ध० श्लो० ११० ] इति भाट्टाः।

प्रत्यवायपरिहारकामेन नित्यनैमित्तकानुष्ठानयोः प्रवर्तनात्। तयोरपि काम्यानुष्ठानकुक्षौ निक्षेपात् तत्करणमपि मोक्षकाङ्क्षिणाऽनवधीयते इति प्राभाकराः प्रत्यूचिरे।

[ उत्तरपक्षः ]

§ ६ तदेतन्मीमांसकमतं तावद् दृष्टविरुद्धम्, मीमांसकाख्यैर्भाट्टैः प्राभाकरैश्च पृथिव्यादयोऽर्थाः सत्तादिसामान्यतोऽनुव्यज्यन्ते। तच्च सत्तादिसामान्यं सर्वथा नित्यं निरवयवमेकं व्यापकमिति तैरभिमतम्; तत्तु प्रत्यक्षविरुद्धमेव, सदृशपरिणामलक्षणस्य सामान्यस्यानित्यस्यासर्वगतस्य रूपादिवदनेकव्यक्तात्मतयाऽनेकरूपस्यैव प्रत्यक्षतः प्रतीतेः। न हि भिन्नदेशासु व्यक्तिषु सामान्यमेकं प्रत्यक्षतः स्थूणादौ वंशादिवत् प्रतीयते; व्यक्तेरुत्पादविनाशेऽपि अनुत्पादमविनाशं वा यतस्तत्प्रत्यक्षं स्यात्। तदिदं परोदितस्वरूपं सामान्यं प्रत्यक्षबुद्धावात्मानं न समर्थयति प्रत्यक्षतां च स्वीकर्तुमिच्छतीत्यमूल्यदानक्रयित्वात् सतामुपहासास्पदमेव स्यात्।

§ ७ तथापि यदि याज्ञिका वैयात्यात् तथैवेति विवदन्ते, तर्हि तत्र ब्रूमः; एकत्र व्यक्तौ सर्वात्मना वर्तमानस्य[1] अन्यत्र वृत्तिर्न स्यात्। तत्र हि वृत्तिः तद्देशे गमनात्, पिण्डेन सहोत्पादात्, तद्देशे सद्भावात् अंशवत्तया वा स्यात्, न तावद् गमनादन्यत्र पिण्डे तस्य वृत्तिः, निष्क्रियत्वोपगमात्। किं च पूर्वपिण्डपरित्यागेन [2]तत्तत्र गच्छेत्, अपरित्यागेन वा, न तावत् परित्यागेन, प्राक्तनपिण्डस्य गोत्वपरित्यक्तस्य अगोरूपताप्रसंगात्, नाप्यपरित्यागेन, अपरित्यक्तपिण्डस्यास्यानगरूपादेरिव गमनासंभवात्। न ह्यपरित्यक्तपूर्वाधाराणां रूपादीनामाधारान्तरसंक्रान्तिर्दृष्टा। नापि पिण्डे [ न ] सहोत्पादात्, तस्यानित्यतानुपगात्। नापि तद्देशे सत्त्वात्, पिण्डोत्पत्तेः प्राक् तत्र निराधारस्यास्याव्यवस्थानाभावात्, भावे वा स्वाश्रयमात्रवृत्तित्वविरोधः। नाप्यंशवत्तया; निरंशत्वप्रतिज्ञानात्। ततो व्यक्त्यन्तरे सामान्यस्याभावानुषंगः।

§ ८. परेषां प्रयोगः—ये यत्र नोत्पन्ना नापि प्रागवस्थायिनो नापि पश्चादन्यतो देशादागतमन्तः ते तत्रासन्तो, यथा खरोत्तमाङ्गे तद्विषाणम्, तथा च सामान्यं तच्छून्यदेशोत्पादवति घटादिके वस्तुनीति। तदुक्तम्—

"न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वमाधारमहो व्यसनसंततिः ॥"

[ ] इति

§ ९. नन्वेष दोषो भेदवादिनामेव न तु मीमांसकानाम्, तैः सामान्यव्यक्त्योस्तादात्म्याङ्गीकरणात्।

१ सामान्यस्य इति शेषः। २. सामान्यम्।

1 —र्थी प्रव- क० ख०। 2 मान स्यात स्यान्य- क०, ख०। 3 पिण्डे सहो, क०, ख०।

"तादात्म्यमस्य कस्माच्चेत् स्वभावादिति गम्यताम् ।'
[ मी० श्लो० आकृति० श्लो० ४७ ]

इत्यभिधानादिति चेत्, तथा व्यक्तिवत्तस्यासाधारणमाधारण[1]रूपत्वानुषंगात्। व्यक्त्युत्पाद-विनाशयोश्चास्यापि तद्योगित्वप्रसंगात् ।

§ १० न सामान्यरूपता वा साधारणरूपत्वम्; उत्पादविनाशयोगित्वं चास्य नाभ्युपगम्यते, तर्हि विरुद्धधर्माध्यासतो[2] व्यक्तिभ्योऽस्य भेद स्यात् । उक्तं च—

"तादात्म्यं चेन्मतं जातेर्व्यक्तिजन्मन्यजातता ।
नाशोऽनाशश्च केनेष्टस्तद्वच्चानन्वयो न किम् ॥
व्यक्तिजन्मन्यजाता चेदागता[3] नाश्रयान्तरात् ।
प्रागासीन्न च तद्देशे सा तया संगता कथम् ॥
व्यक्तिनाशे न चेन्नष्टा गताव्यक्त्यन्तरं न च ।
तच्छून्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम् ॥
व्यक्तेर्जात्यादियोगेऽपि यदि जाते सं नेष्यते ।
तादात्म्यं कथमिष्टं स्यादनुपप्लुतचेतसाम् ॥"
[ हेतुवि० टी० पृ० ३२ ]

इत्येवमनेकदोषदुष्टत्वात् याज्ञिकानुज्ञातसामान्यं खरविषाणवदसदेव स्यात् ।

§ ११ यत्तु तत्सद्भावसाधनमुक्तं परैः —

"पिण्डभेदेषु गोबुद्धिरेकगोत्वनिबन्धना ।
गवाभास्यैकरूपाभ्यामेकगोपिण्डबुद्धिवत् ॥"
[ मी० श्लो० वन० श्लो० ४४ ]

"न शाबलेयाद् गोबुद्धिस्ततोऽन्यालम्बनापि वा ।
तदभावेऽपि सद्भावाद् घटे पार्थिवबुद्धिवत् ॥"
[ मी० श्लो० वन० श्लो० ४ ]

इत्यादि; तत्सर्वं सिद्धसाधनम्; अनुवृत्तप्रत्ययस्य सदृशपरिणामलक्षणसामान्यालम्बनत्व-सिद्धेः ।

§ १२ न हि वयं [4]बौद्धवत् सामान्यस्यापह्नोतारः; केवलं [३]परपरिकल्पितसर्वथानित्य-त्वादिविशेषणविशिष्टमेव सामान्य न मृष्यामहे । सर्वथा नित्यस्यैकस्यानष्टस्य[5] सर्वगतस्य विचार्य-माणस्यासंभवात् ।

§ १३ 'नित्यं सदादि सामान्य प्रत्यभिज्ञायमानत्वात्, शब्दवत्' इति चेत्, न; हेतो विरुद्ध-त्वात् । कथंचिन्नित्यस्य इष्टविरुद्धस्य साधनात् । सर्वथा नित्यस्य प्रत्यभिज्ञानायोगात् । तदेवेदमिति-पूर्वोत्तरपर्यायव्यापिनैकत्र प्रत्ययस्योपपत्तेः, पौर्वापर्यरहितस्य[3] पूर्वापरप्रत्ययविषयत्वासंभवात् ।

१ जात्यादियोग । २ नैयायिकादिपरिकल्पित । ३. कूटस्थनित्यस्य ।

1 –स्यासाधारणरूप– क० । 2 –द्धध्यासतो क०, ख० । 3 –नागता ख० । 4 चार्वाकवत् क० । 5. –स्यानस्तस्य क० । स्यानगस्य ख० ।

§ १४. धर्माविव[1] पूर्वापरभूतौ न धर्मिसामान्यमिति चेत्, कथं तदेवेदमित्यभेदप्रतीतिः, पूर्वापरस्वरूपयोरतीतवर्तमानयो तदित्यतीतपरामर्शिना स्मरणेन इदमिति वर्तमानोल्लेखिना प्रत्यक्षेण च विषयीक्रियमाणयो परस्पर भेदात्।

§ १५ सदादिसामान्यादेकस्मात्तयो· कथचिद्भेदाभेदप्रतिपत्तिरिति चेत्, सिद्धं तस्य कथंचिदनित्यत्वम्, अनित्यस्वधर्मोव्यतिरेकात्। न ह्यनित्यादभिन्न नित्यमेव युक्तम्, अनित्य-[1]स्वात्मवत् सर्वथानित्यस्य क्रमयौगपद्याभ्यामर्थक्रिया[2]विरोधाच्च। तदनित्यं सामान्य विशेषादेशात् शब्दवत्। तत एवानेकं तद्वत्। सदित्यादिस्वप्रत्ययाविशेषादेक सत्तादिसामान्यमिति चेत्, न; सर्वथास्वप्रत्ययाविशेषस्या[3]सिद्धत्वात् प्रतिपदादिव्यक्ति सदित्यादिप्रत्ययस्य [2]विशेषात्। तद्व्यक्ति-विषयो विशेषप्रत्यय इति चेत्, तर्हि ता व्यक्तयः सामान्यात् सर्वथा यदि भिन्नाः प्रतिपद्यन्ते, तदा यौगमतप्रवेशो मीमासकस्य, स चायुक्त., [3]तन्मते सबन्धस्य[4] निरस्तत्वात्, तस्येति व्यप-देशानुपपत्ते.।

§ १६ अथ कथंचिदभिन्नाः, तदा सिद्ध सामान्यस्य विशेषप्रत्ययविषयत्वम्, विशेष-प्रत्ययविषयेभ्यो विशेषेभ्य कथचिदभिन्नस्य सामान्यस्य विशेषप्रत्ययविषयतोपपत्ते विशेषस्वात्मवत्। ततो नैकमेव सत्तादिसामान्यम्। नाप्यनशम्; कथचित् साशत्वप्रतीते; सांशेभ्यो विशेषेभ्योऽनर्थान्तरभूतस्य साशत्वोपपत्ते तत्स्वात्मवत्। तथा सर्वगत तत् सामान्य व्यक्त्यन्तरालेऽनुपलभ्यमान-त्वात्। तत्राभिव्यक्तत्वात्तस्यानुपलम्भ इति चेत्; तत एव व्यक्तिस्वात्मनोऽपि तत्रानुपलम्भोऽस्तु। तत्र तस्य सद्भावावेदकप्रमाणाभावादसत्त्वादेवानुपलम्भ इति चेत्, सामान्यस्यापि विशेषभावा[4]दसत्त्वा-देवानुपलम्भोऽस्तु, व्यक्त्यन्तराले तस्यापि सद्भावावेदकप्रमाणाभावात्, प्रत्यक्षतस्तथाननुभवात्, खरविषाणादिवत्। न हि भिन्नदेशासु व्यक्तिपु सामान्यमेकम्, यथा स्थूणादिपु वंशादिरिति प्रतीयते, यतो युगपदभिन्न[5]देशस्वाधारवृत्तित्वे सत्येकत्व तस्य सिद्ध्येत्, स्वाधारान्तराले[6] अस्तित्व साधयेदिति तदेवमनेकबाधकसद्भावात् भाट्टप्राभाकरैरिष्ट

[ भद्र भूयात ]

---

१ अनित्यस्वात्मवत। २ भेदात। ३ यौगमते। ४ समवायस्य।

1 धर्मादेव क०, ख०। 2 -मर्थविरोधाच्च क०, ख०। 3 -प स्यासिद्धस्यात् क०, ख०। 4 विशेषाभाव- क०, ख०। 5 युगपद् भिन्न ख०। 6. न्तरालेऽपि क०।

खण्डितुं मानिनां मानं मण्डितुं जिनधर्मिणाम् ।
विदुषां प्रीतये भूयाद् विद्यानन्दकृता कृतिः ॥

क्रम

१. सत्यशासन-परीक्षाकी मूल कारिकाओंकी अनुक्रमणिका।

२ मूल ग्रन्थमें उद्धृत वाक्योंकी अनुक्रमणिका।

३ प्रस्तावना तथा मूलगत विशिष्ट शब्द।

# परिशिष्ट १

## सत्यशासन-परीक्षाकी मूल कारिकाओंकी अनुक्रमणिका

# परिशिष्ट २

## उद्धृत वाक्य-सूची

# परिशिष्ट ३

## प्रस्तावना तथा मूलग्रन्थगत विशिष्ट शब्द*

### प्रस्तावनागत विशिष्ट शब्द



* प्रथम अंक पृष्ठ तथा दूसरा अंक पंक्तिका बोधक है।

## मूलग्रन्थगत विशिष्ट शब्द

# सहायक ग्रन्थ सूची


| | |
|---|---|
| आप्तमीमांसा | वीरसेवामन्दिर, सरसावा |
| छान्दोग्योपनिषद् | निर्णयसागर, बम्बई |
| तत्त्वसंग्रह | ओरियण्टल सीरीज बड़ौदा |
| न्यायबिन्दु | का० जायसवाल सीरीज, पटना |
| न्यायविनिश्चय | भारतीय ज्ञानपीठ, काशी |
| न्यायसूत्र | चौखम्बा सीरीज, काशी |
| प्रमाणवार्तिक | बिहार उड़ीसा रिसर्च सो०, पटना |
| प्रमाणवार्तिकलंकार | का० जायसवाल इंस्टीटयूट, पटना |
| प्रशस्तपादभाष्य | चौखम्बा सीरीज, काशी |
| ब्रह्मसूत्र | ,, ,, ,, |
| भगवद्गीता | आनन्दाश्रम, पूना |
| मीमांसाश्लोकवार्तिक | चौखम्बा सीरीज, काशी |
| मैत्रायण्युपनिषद् | निर्णय सागर, बम्बई |
| यशस्तिलक उत्तरार्ध | ,, ,, ,, |
| युक्त्यनुशासन | माणिकचन्द्र ग्रन्थमाला, बम्बई |
| लघीयस्त्रय | सिन्धी-जैन सीरीज, भारतीय विद्याभवन, बम्बई |
| बृहदारण्यक | निर्णय सागर, बम्बई |
| शृङ्गारशतक | निर्णयसागर, बम्बई, |
| सम्बन्धवार्तिक | |
| सांख्यकारिका | चौखम्बा सीरीज, काशी |
| सिद्धिविनिश्चय | भारतीय ज्ञानपीठ, काशी |
| सौन्दरनन्द महाकाव्य | रॉयल एशियाटिक सोसाइटी ऑव बेंगाल, कलकत्ता |
| हेतुबिन्दुटीका | ओरियण्टल सीरीज, बड़ौदा |

## BHĀRATĪYA JÑĀNAPĪṬHA

## MŪRTIDEVĪ JAINA GRANTHAMĀLĀ

*General Editors .*

Dr H L JAIN, Jabalpur  Dr A N UPADHYE, Kolhapur.

The Bhāratīya Jñānapītha, is an Academy of Letters for the advancement of Indological Learning In pursuance of one of its objects to bring out the forgotten, rare unpublished works of knowledge, the following works are critically or authentically edited by learned scholars who have, in most of the cases, equipped them with learned Introductions etc and published by the Jñānapīṭha

**Mahābandha or the Mahādhavalā :**

This is the 6th Khanda of the great Siddhānta work *Ṣaṭkhandāgama* of Bhūtabali : The subject matter of this work is of a highly technical nature which could be interesting only to those adepts in Jaina Philosophy who desire to probe into the minutest details of the Karma Siddhānta The entire work is published in 7 volumes The Prākrit Text which is based on a single Ms is edited along with the Hindī Translation Vol I is edited by Pt S C DIWAKAR and Vols 2 to 7 by Pt PHOOLACHANDRA Jñānapītha Mūrtidevī Jaina Granthamālā, Prākrit Grantha Nos 1, 4 to 9 Super Royal Vol I · pp 20+80+350 ; Vol II pp 4+40+440 ; Vol III pp 10+496 ; Vol IV : pp 16+428 ; Vol V · pp 4+460 , Vol VI . pp 22+370 , Vol VII pp 8+320 Bhāratīya Jñānapītha Kashi, 1947 to 1958. Price Rs 11/- for each vol

**Karalakkhana :**

This is a small Prākrit Grantha dealing with palmistry just in 61 gāthās The Text is edited along with a Sanskrit Chāyā and Hindī Translation by Prof P K MODI Jñānapītha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No 2 Third edition, Crown pp 48 Bhāratīya Jnānapīṭha Kashi, 1964 Price 75 nP.

**Madanaparājaya :**

An allegorical Sanskrit Campū by Nāgadeva (of the Saṁvat 14th century or so) depicting the subjugation of Cupid Edited critically by Pt RAJKUMAR JAIN with a Hindī Introduction, Translation etc, Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 1 Second edition Super Royal pp 14+58+144 Bhāratīya Jñānapītha Kashi, 1964 Price Rs 8/-

**Kannada Prāntīya Tādapatrīya Grantha-sūcī :**

A descriptive catalogue of Palmleaf Mss in the Jaina Bhandāras of Moodbidri, Karkal, Aliyoor etc Edited with a Hindī Introduction etc by Pt K BHUJABALI SHASTRI Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 2 Super Royal pp 32+324 Bhāratīya Jñānapītha Kashi, 1948 Price Rs 13/-

**Tattvārtha-vṛtti :**

This is a critical edition of the exhaustive Sanskrit commentary of Śrutasāgara (*c.* 16th century Vikrama Samvat) on the Tattvārthasūtra of Umāsvāti which is a systematic exposition in Sūtras of the fundamentals of Jainism The Sanskrit commentary is based on earlier commentaries and is quite elaborate and thorough Edited by Pts MAHENDRAKUMAR and UDAYACHANDRA JAIN Prof MAHENDRAKUMAR has added a learned Hindī Introduction on the exposition of the important topics of Jainism The edition contains a Hindī Translation and important Appendices of referential value Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 4 Super Royal pp 108+548 Bhāratīya Jñānapīṭha Kashi, 1949, Price Rs 16/-

**Ratna-Mañjūṣā with Bhāṣya :**

An anonymous treatise on Sanskrit prosody Edited with a critical Introduction and Notes by Prof H D VELANKAR Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 5 Super Royal pp 8+4+72 Bhāratīya Jñānapīṭha Kashi, 1949 Price Rs 2/-.

**Nyāyaviniścaya-vivarana :**

The Nyāyaviniścaya of Akalaṅka (about 8th century A D) with an elaborate Sanskrit commentary of Vādirāja (*c* 11th century A. D) is a repository of traditional knowledge of Indian Nyāya in general and of Jaina Nyāya in particular Edited with Appendices etc by Pt MAHENDRAKUMAR JAIN. Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos 3 and 12. Super Royal Vol I. pp 68+546, Vol II: pp 66+468 Bhāratīya Jñānapīṭha Kashi, 1949 and 1954. Price Rs. 15/- each

**Kevalajñāna-praśna-cūḍāmani :**

A treatise on astrology etc Edited with Hindī Translation, Introduction, Appendices, Comparative Notes etc by Pt NEMICHANDRA JAIN Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 7 Super Royal pp 16+128 Bhāratīya Jñānapīṭha Kashi, 1950. Price Rs 4/-

**Nāmamālā :**

This is an authentic edition of the Nāmamālā, a concise Sanskrit Lexicon of Dhanamjaya (c 8th century A D) with an unpublished Sanskrit commentary of Amarakīrti (c 15th century A.D) The Editor has added almost a critical Sanskrit commentary in the form of his learned and intelligent foot-notes Edited by Pt SHAMBHUNATH TRIPATHI, with a Foreword by Dr P L VAIDYA and a Hindī Prastāvanā by Pt MAHENDRAKUMAR The Appendix gives Anekārtha nighantu and Ekākṣarī-kośa Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 6 Super Royal pp 16+140 Bhāratīya Jñānapīṭha Kashi, 1950 Price Rs 3.50 nP

**Samayasāra :**

An authoritative work of Kundakunda on Jaina spiritualism Prākrit Text, Sanskrit Chāyā Edited with an Introduction, Translation and Commentary in English by Prof A CHAKRAVARTI The Introduction is a masterly dissertation and brings out the essential features of the Indian and Western thought on the all-important topic of the Self Jñānapītha Mūrtidevī Jaina Granthamālā, English Grantha No 1 Super Royal pp 10+162+244 Bhāratīya Jñānapīṭha Kashi, 1950 Price Rs 8/-

**Jātakatthakathā .**

This is the first Devanāgarī edition of the Pāli Jātaka Tales which are a store-house of information on the cultural and social aspects of ancient India Edited by Bhikshu DHARMARAKSHITA Jñānapīṭha Mūrtidevī Pāli Granthamālā No 1, Vol 1 Super Royal pp 16+384 Bhāratīya Jñānapītha Kashi, 1951 Price Rs 9/-

**Kural or Thirukkural :**

An ancient Tamil Poem of Thevar It preaches the principles of Truth and Non-violence The Tamil Text and the commentary of Kavirājapandita Edited by Prof A CHAKRAVARTI with a learned Introduction in English Bhāratīya Jñānapītha Tamil Series No 1. Demy pp 8+36+440 Bhāratīya Jñānapītha Kashi, 1951 Price Rs 5/-

**Mahāpurāna :**

It is an important Sanskrit work of Jinasena-Gunabhadra, full of encyclopædic information about the 63 great personalities of Jainism and about Jain lore in general and composed in a literary style. Jinasena (837 A D) is an outstanding scholar, poet and teacher; and he occupies a unique place in Sanskrit Literature This work was completed by his pupil Gunabhadra Critically edited with Hindī Translation, Introduction, Verse Index etc by Pt PANNALAL JAIN Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos 8, 9 and 14 Super Royal Vol I Second edition, pp 8+68+746 Varanasi 1963; Vol II: pp 8+556, Vol III. pp 8+16+640; Bhāratīya Jñānapīṭha Kashi, 1951 to 1954 Price Rs 10/- each

**Vasunandi Śrāvakācāra :**

A Prākrit Text of Vasunandi (c Samvat first half of 12th century) in 546 gāthās dealing with the duties of a householder, critically edited along with a Hindī Translation by Pt HIRALAL JAIN The Introduction deals with a number of important topics about the author and the pattern and the sources of the contents of this Śrāvakācāra There is a table of contents There are some Appendices giving important explanations, extracts about Pratisthāvidhāna, Sallekhanā and Vratas There are 2 Indices giving the Prākrit roots and words with their Sanskrit equivalents and an Index of the gāthās as well Jñānapīṭha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No 3 Super Royal pp 230 Bhāratīya Jñānapīṭha Kashi, 1952. Price Rs 5/-.

**Tattvārthavārttikam or Rājavārttikam :**

This is an important commentary composed by the great logician Akalaṅka on the Tattvārthasūtra of Umāsvāti The text of the commentary is critically edited giving variant readings from different Mss by Prof. MAHENDRAKUMAR JAIN Jñānapītha Mūrtidevī Granthamālā, Sanskrit Grantha Nos. 10 and 20 Super Royal Vol I. pp 16+430, Vol II. pp 18+436 Bhāratīya Jñānapītha Kashi, 1953 and 1957 Price Rs 12/- for each Vol

**Jinasahasranāma :**

It has the Svopajña commentary of Paṇḍita Āśādhara (V. S. 13th century) In this edition brought out by Pt HIRALAL a number of texts of the type of Jinasahasranāma composed by Āśādhara, Jinasena, Sakalakīrti and Hemacandra are given Āśādhara's text is accompanied by Hindī Translation Śrutasāgara's commentary of the same is also given here There is a Hindī Introduction giving information about Āśādhara etc There are some useful Indices Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 11 Super Royal pp 288 Bhāratīya Jñānapīṭha Kashi, 1954 Price Rs 4/-

**Purānasāra-Saṁgraha :**

This is a Purāna in Sanskrit by Dāmanandi giving in a nutshell the lives of Tīrthaṁkaras and other great persons The Sanskrit text is edited with a Hindī Translation and a short Introduction by G C JAIN Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos 15 and 16 Crown Part I pp 20+198 ; Part II · pp 16+206 Bhāratīya Jñānapītha Kashi, 1954, 1955 Price Rs 2/- each

**Sarvārtha-Siddhi :**

The Sarvārtha-Siddhi of Pūjyapāda is a lucid commentary on the Tattvārthasūtra of Umāsvāti called here by the name Gṛdhrapiccha It is edited here by Pt PHOOLACHANDRA with a Hindī Translation, Introduction, a table of contents and three Appendices giving the Sūtras, quotations in the commentary and a list of technical terms Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No. 13. Double Crown pp 116+506 Bhāratīya Jñānapītha Kashi, 1955 Price Rs 12/-

**Jainendra Mahāvṛtti :**

This is an exhaustive commentary of Abhayanandi on the *Jainendra Vyākarana*, a Sanskrit Grammar of Devanandi alias Pūjyapāda of circa 5th-6th century A. D Edited by Pts S N TRIPATHI and M CHATURVEDI There are a Bhūmikā by Dr V S AGRAWALA, *Devanandikā Jainendra Vyākarana* by PREMI and *Khilapāṭha* by MIMĀNSAKA and some useful Indices at the end Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 17 Super Royal pp. 56+506. Bhāratīya Jñānapītha Kashi, 1956 Price Rs 15/-

**Vratatithi Nirnaya :**

The Sanskrit Text of Simhanandi edited with a Hindī Translation and detailed exposition and also an exhaustive Introduction dealing with various Vratas and rituals by Pt NEMICHANDRA SHASTRI Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 19 Crown pp 80+200 Bhāratīya Jñānapīṭha Kashi, 1956 Price Rs 3/-

**Pauma-cariu :**

An Apabhraṁśa work of the great poet Svayambhū (677 A D) It deals with the story of Rāma The Apabhraṁśa text up to 56th Sandhi with Hindi Translation and Introduction of Dr DEVENDRAKUMAR JAIN, is published in 3 Volumes Jñānapītha Mūrtidevī Jaina Granthamālā, Apabhraṁśa Grantha Nos 1, 2 & 3 Crown size, Vol I pp 28+333 ; Vol II pp 12+377, Vol III pp 6+253 Bhāratīya Jñānapītha Kashi, 1957, 1958 Price Rs 3/- for each Vol

**Jīvamdhara-Campū :**

This is an elaborate prose Romance by Haricandra written in Kāvya style dealing with the story of Jīvamdhara and his romantic adventures. It has both the features of a folk-tale and a religious romance and is intended to serve also as a medium of preaching the doctrines of Jainism The Sanskrit Text is edited by Pt. PANNALAL JAIN along with his Sanskrit Commentary, Hindī Translation and Prastāvanā There is a Foreword by Prof K K HANDIQUI and a detailed English Introduction covering important aspects of Jīvamdhara tale by Drs. A N UPADHYE and H L JAIN Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 18 Super Royal pp 4+24 +20+344. Bhāratīya Jñānapītha Kashi, 1958 Price Rs 8/-.

**Padma-purāṇa :**

This is an elaborate Purāna composed by Raviseṇa (V S. 734) in stylistic Sanskrit dealing with the Rāma tale It is edited by Pt PANNALAL JAIN with Hindī Translation, Table of contents, Index of verses and Introduction in Hindī dealing with the author and some aspects of this Purāṇa Jñānapīṭha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos 21, 24, 26 Super Royal Vol I · pp 44+548; Vol II : pp 16+460, Vol III · pp 16+472 Bhāratīya Jñānapīṭha Kashī, 1958-59 Price Rs 10/- each

**Siddhi-viniścaya :**

This work of Akalaṅkadeva with Svopajñavṛtti along with the commentary of Anantavīrya is edited by Dr. MAHENDRAKUMAR JAIN. This is a new find and has great importance in the history of Indian Nyāya literature It is a feat of editorial ingenuity and scholarship The edition is equipped with exhaustive, learned Introductions both in English and in Hindi, and they shed abundant light on doctrinal and chronological problems connected with this work and its author There are some 12 useful Indices Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha Nos 22, 23 Super Royal Vol I · pp 16+174+370, Vol. II: pp 8+808. Bhāratīya Jñānapītha Kashi, 1959 Price Rs 18/- and Rs 12/-

**Bhadrabāhu-Samhitā .**

A Sanskrit text by Bhadrabāhu dealing with astrology, omens, portents etc Edited with a Hindī Translation and occasional Vivecana by Pt NEMICHANDRA SHASTRI There is an exhaustive Introduction in Hindī dealing with Jain Jyotisa and the contents, authorship and age of the present work Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 25 Super Royal pp 72+416 Bhāratīya Jñānapīṭha Kashi, 1959 Price Rs 8/-

**Pañcasaṁgraha :**

This is a collective name of 5 Treatises in Prākrit dealing with the Karma doctrine the topics of discussion being quite alike with those in the Gōmmatasāra etc The Text is edited with a Sanskrit commentary, Prākrit Vṛtti by Pt HIRALAL who has added a Hindī Translation as well A Sanskrit Text of the same name by one Śrīpāla is included in this volume There are a Hindī Introduction discussing some aspects of this work, a Table of contents and some useful Indices Jñānapītha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No 10 Super Royal pp 64+804 Bhāratīya Jñānapītha Kashi, 1960 Price Rs 15/-

**Mayana-parājaya-cariu :**

This Apabhraṁśa Text of Harideva is critically edited along with a Hindī Translation by Prof Dr HIRALAL JAIN It is an allegorical poem dealing with the defeat of the god of love by Jina. This edition is equipped with a learned Introduction both in English and Hindī The Appendices give important passages from Vedic, Pāli and Sanskrit Texts There are a few explanatory Notes, and there is an Index of difficult words Jñānapītha Mūrtidevī Jaina Granthamālā, Apabhramśa Grantha No 5 Super Royal pp 88+90 Bhāratīya Jñānapītha Kashi, 1962 Price Rs 8/-

**Harivamśa Purāna :**

This is an elaborate Purāṇa by Jinasena (Śaka 705) in stylistic Sanskrit dealing with the Harivamśa in which are included the cycle of legends about Kṛsna and Pāndavas The text is edited along with the Hindī Translation and Introduction giving information about the author and this work, a detailed Table of contents and Appendices giving the verse Index and an Index of significant words by Pt PANNALAL JAIN Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 27 Super Royal pp 12+16+812+160 Bhāratīya Jñānapītha Kashi, 1962 Price Rs 16/-

**Karmaprakrti :**

A Prākrit text by Nemicandra dealing with Karma doctrine, its contents being allied with those of Gommatasāra Edited by Pt. HIRALAL JAIN with the Sanskrit commentary of Sumatikīrti and Hindī Ṭīkā of Pandita Hemarāja, as well as translation into Hindī with Viśesārtha Jñānapītha Mūrtidevī Jaina Granthamālā, Prākrit Grantha No 11 Super Royal pp 32+160 Bhāratīya Jñānapīṭha Kashi, 1964 Price Rs 6/-

**Upāsakādhyayana :**

It is a portion of the Yaśastilaka-campū of Somadeva Sūri. It deals with the duties of a householder Edited with Hindi Translation, Introduction and Appendices etc by Pt KAILASHCHANDRA SHASTRI Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 28. Super Royal pp 116+539, Bhāratīya Jñānapītha, Kashi, 1964. Price Rs 12/-

**Bhojacaritra :**

A Sanskrit work presenting the traditional biography of the Paramāra Bhoja by Rājavallabha (15th century A D) Critically edited by Dr B Ch. CHHABRA, Jt Director General of Archæology in India and S SANKARANARAYANA with a Historical Introduction and Explanatory Notes in English and Indices of Proper names Jñānapītha Mūrtidevī Jaina Granthamālā, Sanskrit Grantha No 29 Super Royal pp 24+192 Bhāratīya Jñānapītha Kashi, 1964. Price Rs 8/-

**Satyasāsana-parīkṣā**

A Sanskrit text on Jain logic by Ācārya Vidyānandi, critically edited for the first time by GOKULCHANDRA JAIN. It is a critique of selected issues upheld by a number of philosophical schools of Indian Philosophy There is an English compendium of the text, by Dr NATHMAL TATIA Jñānapītha Mūrtidevī Jain Granthamālā, Sanskrit Grantha No 30 Super Royal pp 56+34+62 Bhāratīya Jñānapītha, Kashi, 1964 Price Rs 5/-.

**Karakaṇḍa-cariu**

An Apabhraṁśa text dealing with the life story of king Karakaṇḍa, famous as 'Pratyeka Buddha' in Jaina & Buddhist literature Critically edited with Hindi & English Translations, Introductions, Explanatory Notes and Appendices etc by Dr HIRALAL JAIN Jñānapītha Mūrtidevī Jaina Granthamālā, Apabhraṁśa Grantha No 4 Super Royal pp 64+278 Bhāratīya Jñānapītha Kashi, 1964 Price Rs 10/-

*For Copies Please write to—*

BHARATIYA JNANPITH,
3620/21 Netaji Subhas Marg, Dariyaganj,
Delhi (India)

or

BHARATIYA JNANPITH,
Durgakund road, Varanasi (India).